वृत्र-हति[a]- (>वार्त्रहत- पा.) पाग ५,२,६१.

†वृत्र-हत्य[b]- -त्याय शांश्रौ १४, २१, २; -त्ये ऋप्रा २, ४३; -त्येषु ऋप्रा ८,२७.

†वार्त्रहत्य[b]- -त्याय आश्रौ ६, ४,१०; शांश्रौ ३, ३, ४; ९,९, ३; काश्रौ.

वृत्र-हन्[b]- पा ३,२,८७; पाग ५, २,६१[a]; -घ्नः पावा ८, ४, २; -घ्ने शांश्रौ ३,३,२; काश्रौ २५, ४,४४; आपश्रौ; बाश्रौ १,७,३, २५;५,३५; -†हणम् वैताश्रौ ५, १४; या ७,२३∮; -†हणा आश्रौ ५, १०, २८; शांश्रौ; -†०हणा आश्रौ ३,७,१३; शांश्रौ; -हणौ माश्रौ १, ४, २, ५†; -†०हन् आश्रौ २, १८, १९××; शांश्रौ; -हभिः आश्रौ ३, ७, १३†; पावा १,१,३९; -हा आश्रौ २, १८,१८; आपश्रौ ३,१,२१××; १६, २, १०[c]; बौश्रौ; हिश्रौ ११, १, २२[c]; सु २९,५; बृदे ४, १२६; ६, ११०.

वृत्रघ्नी- पागम ५३.

वार्त्रघ्न[b]- पा ५,२,६१; -घ्नः शांश्रौ २, ५, १२; आपश्रौ; -†घ्नम् काश्रौ १५,५,१७; शुप्रा ३,९२; -घ्नौ[d] आश्रौ १,५,३२; शांश्रौ १,८,१; १६,१२; काश्रौ; काठ्र ४७,९[e].

वार्त्रघ्नी[b]- -घ्नी तैप्रा ४,२८; -घ्नीम् बौश्रौ २६,१८: ९; -घ्न्यौ शुअ २,३५०.

वार्त्रघ्न-कल्पन- -ने माश्रौ ५,१,५,८.

†वृत्रहन्-तम[b]- -०म शांश्रौ १८, ८,११; -मः आपश्रौ २२, २८, १७[f]; बौश्रौ १८,१४:३; १७: १८[f]; हिश्रौ २३, ४,५६[f]; -मम् शांश्रौ २,१५,२; वैताश्रौ ३०, १६; -मा शुअ ३,२३८; -माय आश्रौ ८,४,१; शांश्रौ १२, २६, ९;१८,१५,५.

वृत्रह-प्रवाद- -देन निसू ७, १०: २३.

वृत्वन्- पाउभो २,१,२८०.

[1]वृत्वा √वृ(वरणे) द्र.

[2]वृत्वा √वृ(आच्छादने) द्र.

वृथा[b] शांश्रौ १२,१४, १; काठ्र ३, १, ४१; शंध ९९; विध ६३, ४४; माशि ५,३†; पाग १,१,३७.

वृथा-कर्मन्- -र्माणि आपध १, ४, २०; हिध १,१,१२९.

वृथा-कृसर-संयाव-पायस(स-अ)पूप-मांस(स-अ)शन- -नम् शंध १५२.

वृथा-कृसर-संयाव-पायस(स-अ)पूप-शष्कुली- -लीः शंध ४३१; ४६०.

वृथा(था-अ)ग्नि[g]- -ग्निना अप्राय ३, ८; -ग्निभिः बौश्रौ १३, ४३: २२; -ग्निम् बौश्रौ १४,१६:२; १८;१७:२;६;११××; आग्निगृ ३, ७, १:५[?h]; ८,१:१४[?h]; बौपि १, १४:१३; १७:४; -ग्नीन् बौश्रौ २९, ८:१८; -ग्नेः बौश्रौ २४,३३:९.

वृथाग्नि-संसर्ग- -र्गः बौश्रौ २३, ४:२१.

वृथा-चेष्टा- -ष्टाम् विध ७१, ६९.

वृथा-दान- -नम् वाध १६,३१.

वृथा(था-अ)न्न- -न्नम् कौसू ६८, ११.

वृथान्ना(न्न-आ)चमनो(न-उ)त्थान-व्यपेत[i]- -तानि गौध १७, १७.

वृथा-पक्व- -क्वः गोगृ २,९,५; द्राग्र २,३,१८.

वृथा-पशुघ्न- -घ्नः विध ५१,६०.

वृथा-मांस- -सम् आपश्रौ ७, २८, ८†; विध ५१, २०; -सानि विध ५१,६२.

वृथा(था-आ)लम्भ- -म्भे विध ५०, ५०.

वृथा-लिङ्ग->°लिङ्गिन्- -ङ्गिनः विध ८२,६.

वृथा-वाच्- -वाचम् गोगृ ३, ५, १९.

वृथा-श्रमम् बौश्रौ २६,९:२४.

वृथा-सुत[j]- -तम् या ११,४.

वृदृशि[k]-(>वार्दृश्य->°श्र- पा.)

?वृद्दे: अप ४८,१६†.

[1]वृद्ध- (>यक. वार्द्ध-[>°द्धकिन-] पा.) पाग ४,१,१०४;१००.

[2]वृद्ध-, वृद्धि- प्रमृ. √वृध् द्र.

?वृद्धयुच [?] ययोनः[l] सुव ६५.

√वृध्[m] पावा. ध्वा. आत्म. वर्धते; चुरा. उभ. मापाधाम्, वर्धयं

a) तु. पाका. । वृत्रहन्- इति भाण्डा. प्रमृ. । b) वैप १ द्र. । c) पामे. वैप १, १५५३ c द्र. । d) = आज्यभाग-विशेष- । e) °घ्ना° इति पाठः? यनि. शोधः । f) पामे. वैप १, २४९५ a द्र. । g) = ...ग्नि- । मलो. कस. । h) वृथा° इति पाठः? यनि. शोधः (तु. बौपि.) । i) द्वस.>द्वस.>तृस. । j) उप. <√सु (अभिषवे) । k) वै १०७५ f द्र. । l) पाठः? वृद्धय(द्वि-अ)पचय- > -ययोः इति शोधः संभाव्येत (तु. सस्र. बौध ४,५,१७) । m) धा २,१७ पा १,३,९१;९२; ३,१,४५; ७, २,५९ पावा ६, ४, ५३ परामृष्टः द्र. ।

आश्री ३, ४, १२; ६, ११, ७; बौश्री; वर्धतः शाश्री १२, २४, २†; वर्धन्ते हिश्री ३, ८, ४८; अप ६२, २, ४; शैशि २०१; †वर्धात् आश्री १, ७, ७; शांश्री १,१२, १; †वर्धताम् आश्री ३, १३,१५[a]; आपश्री ३, ४, ६; ९, १०, १५; १७,१; बौश्री; वर्धतु आश्री ४, ४, ४†; वर्धन्ताम् बौश्री ३, ५ : १९†; †वर्धन्तु आश्री २, ८, ३; शांश्री ९,१८, १; या १, १०; †वर्धस्व>स्वा आश्री ५, १६, ३; शांश्री १, १२,१२[b]; ७, २४, ६; आपश्री ३, ४, ६[b]; बौश्री[b] ९, १४ : २०; १६ : १; माश्री[b] ३, ४, ६; ४, १७, १; ६, १२, ४; माश्री १, ६,१,३४[b]; वाश्री १, १, ५, २०[b]; हिश्री[b] २, ३, ४६;६,३,८; आपमं २,६,११[b]; आगृ; कौगृ २,६,६[*b]; शांगृ २, १०, ४[b]; आग्निगृ १, १, ४ : १५[b],हिगृ१,८,४[b],†वर्धे,>र्धो शांश्री १४, २३, ४; आपमं २, १०,८,ऋप्रा ७, ३३; ३४; तैप्रा ३, ८;†वर्धत आश्री ७,४,१३; शांश्री ६,४,११; ११,२,११××; †अवर्धन अप्र १५, १; या २, १७; †अवर्धन्त ऋप्रा २, ४६; शैशि २३५; †अवर्धन् आश्री ५, १४,२६; हिश्री ९, २, २४; या १०, ४७; वर्धेन विध १०, १२; विं २,९.

†वर्धिषीमहि[c] शांश्री १, १२, १२; आपश्री ३, ४,६; बौश्री ९, १४ : २०; १६ : १, माश्री.

वावृधन्त ऋप्रा ८, ४१†;

†वावृधस्व आश्री ४, १, २३; बौश्री ३, ३० : १९; आगृ

†वृधातु[d] बौश्री ६,४:५; वाधूश्री ४,२९ : ११.

†वावृधे आश्री ३,८, १; ७, ४, ३; ९, ५, १६; शांश्री; वावृधुः ऋप्रा ५, ३८†; †अवृधत् शांश्री १४.१६, ९; १७,८,८; †वृधन् शांश्री १०,१६,६; अवृधः काग्र ४१,१८†; †अवृधम् आपमं २, ४,१४; काग्र ४१,१८.

†वर्धयते आपश्री ४, ५, ५; माश्री ४, ७, २; हिश्री; वर्धयति आपश्री ७,२४,११, बौश्री १७,५० : ५; वैश्री; वर्धयन्ति बौश्री २७, ४ : ३०; वैताश्री २४, १†; निसू ९, ९ : ७†; आपध २,२४,३; हिध, †वर्धयामः आग्निगृ २, ५, ३ : २१; बौगृ ३, ७, १६; †वर्धयामसि आपश्री ५,६,३; बौश्री २, १४ : १५; हिश्री, वर्धयतु वाधूश्री ४, २९ : १२†; †वर्धयन्तु बौश्री १०, ११ : २; माश्री ६, १, ३, ३; २, २, १५; वाधूश्री; †वर्धयस्व आपश्री ७, ६, ५[e]; बौश्री ४, ७ : १५[e]; माश्री ७, ४, ७[e]; माश्री १, ७, ३,४०[e], वाश्री[e] १, ६, २, १; ६, ११; हिश्री ४, २, ४[e]××; या १०, ४०[e]; †वर्धय,>या काश्री २, २, ८; १२; आपश्री; अवर्धयत् वैताश्री ३९, १३†; अवर्धयन् या १०, ४७†; वर्धयेत् निसू २, ९ : ३३; आगृ ४,८,१०; भागृ १,१ : ८; वैगृ; वर्धयेताम् बौगृ ४, १, १०†; वर्धयेयुः शांश्री ४, १५,७; कौगृ ५, ४,१०.

वर्धयिष्यन्ते शांश्री ३, ८, २९;

†अवीवृधत आश्री १,९,१;५[f]; ३, ४,१५; ६,११, ५; शांश्री. अवीवृधत् वृदे ६, ९७†; †अवीवृधेताम् आश्री ६, ११; ६, शांश्री १.१४,९; ११; १२; †अवीवृधन्त आश्री १, ९, ५; शांश्री १, १४, १४; ६, १, ५; †अवीवृधन् आश्री ७, ८, ३; १२,१५; शांश्री १८, १८, ३; आपश्री; †अवीवृधम् आपश्री १२,७,१०; १०, ९; बौश्री ७, ५ : २२; १४, ४ : ३७; माश्री.

वर्धन- पाग ३, १,१३४; -नानि बौश्री २२,८ : ३९, -नाय या ४,१९; -नेन बौश्री १०, ५१ : १४†; -नेषु बौश्री २२, ८ : ३८.

वर्धमान,ना[g]- पाग ४, १, ८६[h]; पावाग ६,२,१६०;-†नः आपश्री ३,१२,१; माश्री ३, ११, १; हिगृ २, ६, १४; आपमं २,६, ११[c]; या १४,३६; ऋप्रा ३,४,१; -†नम् बौश्री ३,८ : २८; आपमं २,६,११; आग्निगृ १,१,४ : २०;

a) पाभे. वैप १,६२० g द्र.। b) पाभे. वैप १ वर्धस्व मा २,१४ टि. द्र.। c) =मरा. का २,३,९ प्रमृ. मात १,८,२,४;१४.३,१,२३ तैआ ४,११,४। मागमं २,६,११ तु वर्धमानो भूपाम न.[illegible] पाभे.। d) पाभे. वैप १ विधेम मा ४, ७ टि. द्र.। e) पाभे. वैप १ वर्धयस्व मा १२,४४ टि. द्र.। [illegible] नि पाठः? यनि. शोधः (तु. मान.)। g) विप , नाप. (गायत्री- [ऋग्. उनिसू. प्रमृ.])। h) अप.[illegible]

वैगृ; –ना माश्री ५, १२, १५; अप ७०[२], २, ३; ऋअ १, ४, ७७‡××; शुअ १,४७१; ५,२०; अअ १५, १०; ऋप्रा १६, २४; उनिसू १ : १३; पिं ३, १४; –नाः हिश्री ६, ५, १८; –नान् उसू ४,१९; –नाम् आपश्री ५, २०,१७; कप्र २,६, १०; –नासु हिश्री ३,८,४८; –ने आश्री ७, ९, १; १२, १; –नेषु लाश्री ६,५,१.

वार्धमान– पा ४, १, ८६.

वर्धमाना(न-अ)क्ष[a]– -क्षः अप ६८,२,२४.

वर्धयत्– -यन् शांश्री ८,१६,१†; सु ३०,७.

वर्धयमान– -नः या १०,२७.

वर्धयितुम् निघ ५१,७५.

वर्धयित्वा वाश्री १,६, ७, १०; वैगृ.

वर्धित– -तानि वैगृ २,१ : १९.

वर्धिष्णु– पा ३,२,१३६.

†वव्रुधत्– -धन्तः ऋप्रा ९,४३[b].

†वावृधान,ना– -नः आश्री २,१८, १९; ३,८,१; आपश्री ५, ६, ३; ८, २०, ५[c]××; बौश्री; –नम् बौश्री ८,२ : १; हिश्री ९,१,१३; –ना आश्री ५,५,१२; शांश्री ७, २, १०; आपश्री; –नौ कौसू ९६,३; ९७,६.

वावृधान-प्रभृति– -तीनाम् शौच ४,८५.

वावृध्वस्– -ध्वांसम् ऋप्रा ९,२६†.

२वृद्ध,द्धा[d]– पा ६, ४, १५७; पाग २,२,३८; ५,१, १२२[e]; १३३; –द्धः आश्री २,१३, ७†; आपश्री २२,१२, २०†; बौश्री; –द्धम् लाश्री ७,८,५; हिश्रु १,२८; शुप्रा १,१६९××; ऋत २,५,४;३,१, ८; माशि १५,१; पा १,१,७३; पावा १,४,१; –द्धस्य वैगृ ३,२१ : १०; वाध २५,२; हिश्रु १,२९; ३०; पा ४, १,१६६; ५,३,६२; पावा ४,१,१६३; –द्धा सु १०, ४; –द्धाः आगृ १, १४, ८; आपध २,२९,५; गौध ९,६२; –द्धात् पा ४, १,१४८××; पावा ४, ३, १५४; –द्धान् गौपि २, २, ११; आपध २, ४, १२; –द्धानाम् आपध १, १३, १६; १५, १; २०, ८; २, २९, १४; हिध १,४,६०; ६, २२; –द्धाम् भाशि ८०†; –द्धाय बौध २,३, ५०; गौध २६,१२†; –द्धायाः आगृ १,७,२१; वैगृ ३,२१ : १०; –द्धे शंध २७०; गौध ३, ८; –द्धेन शौच ४,५५; –द्धौ माश्री २, २, १, ५०; वाश्री १, ४,४, ४१†; निसू २,९ : ३२.

वार्द्धक– पावा ४,२,३९.

वृद्ध° पा ४,१,१७१; ३,१४४.

वृद्ध-गार्ग्य[f]– -र्ग्यः अप ६१, १, १.

वृद्ध-ग(र्ग>)र्गा[g]– -र्गा भागृ २,१८,२†.

वृद्ध-तर– -राणाम् आपध १,५, १३; १३, ३; हिध १, २, १३; ४,१७; –राय आपध १, १४, १४; हिध १,४,४६; –रे आपध १, ७, २९; हिध १,२,८६.

वृद्ध-ता– पा ५,१,१२२.

वृद्ध-त्व– पा ५,१,१२२; –त्वात् बौध ३, २, १३; पावा ४, १, १४७; १५०; ३, १२७; –त्वे आग्निगृ २,४, ५ : २३; बौध ४, ७,८.

वृद्ध-द्युम्न[h]– -म्नः शांश्री १५, १६,१०.

वृद्ध-पुत्र– > °त्रिन्– -त्री अप ३५,२,५.

वृद्ध-प्रमातामह– -हाय शंध ११६ : ७३.

वृद्धप्रमातामही– -ह्यै शंध ११६ : ७४.

वृद्ध-मारि-नृप-स्नात-स्त्री-रोगि-वर-चक्रिन्– -क्रिणाम् विध ६३, ५१.

वृद्ध-वत् पावा ४,१,९०.

वृद्ध-वत्– -वत् निसू २,११ : २५.

वृद्ध-वयस्[i,j]– -याः द्राश्री ११, १,५†[l]; अप ३८,३,५.

वृद्ध-वाशि(न्>)नी[k]– -नी वा ५,२१.

वृद्ध-वृष्णिय[l]– -यम् आग्निगृ २, ३, ५ : २१†[l].

वृद्ध-वृष्ण्य[l]– -ष्ण्यम् लाश्री ४, १२, २†[l].

वृद्ध-शील– > °लिन्– -ली गोगृ ३,५,१; द्रागृ ३,१,३१.

---

a) बस. । b) =सपा. ऋ ४,२,१७ । शौ १८, ३,२२ तु वावृधन्तः इति पाभे. । c) पाभे. वैप २,३खं. °नः तैब्रा २, ५,८,३ टि. द्र. । d) विप., नाप. ( संज्ञा-विशेष- [पा. प्रभृ.] ) । e) तु. पागम. । f) व्यप. । कस. । g) वैप १ द्र. । h) व्यप. । i) उप. = आयुस्- । j) सपा. लाश्री ४,१,५ वृद्धवयाः इति पाभे. । k) नाप. ( वृक्षी- ) । उस. । l) =सपा. तै ४,४,१२,२ । मै ३,१६,४ तु वृद्धवृष्णाम् इति, काठ २२,१४ आश्री ४,१२,२ वृद्धवृष्ण्यम् इति च पाभे. ।

वृद्ध-श्रवस्[a]- पाउ ४, २२७; -†वाः आपश्रौ १४, १६, १; माश्रौ ४,३,४३; हिश्रौ.

वृद्ध-संज्ञा- -ज्ञायाम् पावा १,१, ७३.

वृद्ध-संप्रदाया(य-अ)नुष्ठित- -तम् शांगृ २,१०,७.

वृद्ध-सेविन्- -वी विध ३,७७.

वृद्धा(द्ध-अ)म्र[b]- -म्रम् वैगृ ५, ६:२१.

वृद्धा(द्ध-अ)नुज्ञात- -तः वैगृ ७, ९:१.

†वृद्धा(द्ध-आ)यु[b]- -युम् बौश्रौ ८,२७:२२; आपमं १, २, ६; आग्निगृ १,२,३:९.

वृद्धा(द्ध-अ)वृद्ध- -द्धाभ्याम् पावा ४,१,९५.

वृद्धा(द्ध-अ)वृद्धा(द्ध-अ)वर्ण-स्वर-द्वयज्-लक्षण[c]- -णे पावा ४,१, १.

वृद्धो(द्ध-उ)क्ष- पा ५,४,७७.

वृद्धि[d]- पा ५, १, ४७[e]; -†द्धयः बौश्रौ ६, २७:२१; आपमं १, २,६; आग्निगृ १,२,३:९; -द्धिः शांगृ ४,३, ३; ऋप ३१, ४, ३; ६४,९, ६; ६८, २, ३५; ५६; विध ६,११[e]; काशु; पा १, १, १; ७३; ६, १, ८८××; -द्धिम् आपमं २,१०,८†; बौगृ ४,२७, १५†, मागृ २, १३, ६†; ऋप; वाध[e] २, ४२; ४८; ५०; -द्धौ: बौश्रौ ७,५:२१[f]; ८,१:१२[f]; -द्धेः निसू ३, ५:२१; काशु ६, ६; पावा ४,४, ३०; ६, १,१०६; ४,४७; ७, २, ३; -द्धौ निसू ३,५; :२४; भागृ ४,७, ३; कागृउ ४४:११; ऋप्र १,१,१२[g]; ऋप; पा ६, ३, २८; -द्ध्या अप्रा ३,४,३; -द्ध्यै कागृउ ४१:१९; भागृ १,१:९†; बौध १,१०,३;४.

वृद्धि-कर्तृ- -र्तारम् ऋप २, ४, १.

वृद्धि-कर्मन्[b]- -र्मणः या २,२४; ९,२५; १२,९.

वृद्धि-गुण- पाग २, २, ३१; -णौ पावा १,१,३.

वृद्धि-ग्रहण- -णम् पावा १,१,३.

वृद्धि-(ज>)जा- -जा बौश्रौ २५,३०:११[?].

वृद्धि-तत्त्व-प्रतिषेध- -धः पावा १,१,५६.

वृद्धि-दर्शन- -नात् मीसू ११,४. ३९.

वृद्धि-निमित्त[b]- -त्तस्य पा ६,३, ३९; -त्तात् पावा ८,२,४२.

वृद्धि-पिण्ड- -ण्डान् ऋप्र २,४, २.

वृद्धि-पुनराधेय- -यम् बौश्रौ ३,२:१३.

वृद्धि-पूर्त- -र्तेषु भागृ २,५,१३; कौगृ ३, १४, ११; गोगृ ४, ३, ३४.

वृद्धि-प्रतिषेध- -धः पावा ६,१, ८८; ७,३,८५; -धस्य पावा ७, ३,१५.

वृद्धिप्रतिषेध-प्रसङ्ग- -ङ्गः पावा ३,१,३०.

वृद्धिप्रतिषेधा(ध-अ)नुपपत्ति- -त्ति. पावा १, १, ३.

वृद्धि-बलीयस्त्व- -स्त्वात् पावा ६,१,९२.

वृद्धि-मत्- -मत्सु ऋप्र १,४,२.

वृद्धिमद्-विधि- -धौ पावा १,१,७२.

!वृद्धि-विंशतिक[h]- -कम् अपं ४:२१.

वृद्धि-विधान- -नम् पावा ६,१, ८४.

वृद्धि-विधि- -धिः पावा ६, १, ९२; -धौ पावा १, ४, ६०; ६, १,१३;८४,९०; ७,२,११४.

वृद्धि-सवर्णदीर्घ-पूर्वसवर्णा(र्ण-आ)देश- -शाः पावा ६, १, १००.

वृद्धि-स्वर- -रौ पावा १,४, २; ४,१,४८.

वृद्धय(द्धि-अ)भाव- -वः विध ६,५, पावा २,४,७०.

वृद्धय(द्धि-अ)र्थ- -र्थम् पावा २, ४,७०.

वृद्धया(द्धि-आ)दि- -दिषु पावा १,१,१.

†वृध्[i]- वृधे आपश्रौ १७, ९, १[j]; वैश्रौ १९, ६:४[j], बौगृ १, ३, ३५; या ४, १९ф; ऋप्रा ४, ९८; ऋत २,६,८.

†वृध[a]- -धः ऋप्रा ४,५१, -धासः आश्रौ ३,८,१; ८,१०,१; शांश्रौ १७,८,५.

†वृधन्[j]- -धन्[k] वाधूश्रौ ४, ९८: ५; वैताश्रौ १७,६; मागृ १,२४: १; कौसू ९१, १०; -धन्तम् काश्रौ ७,८,१; शांश्रौ १२, १०, ९; -धन्तौ ऋप्रा १८,२७.

a) वैप १ द.। b) बस.। c) द्वस.>बस.। d) भाव., नाप. (संज्ञा-विशेष- [पा.])। e) =पुर्गादि-। f) =(उपचाराद् वृद्धिमती-) ऋच्-। g) =(वृद्धिकारक-) कर्म-विशेष-। h) °नतिम् इति पा.। i) =सपा. मा २७, ४४ प्रमृ.। ऋ ६, ४८,२ वृधः इति पाभे.। j) =१वृधन् (तु. वैप १)। k) =शब्दकृति-विशेष-।

वृधन्[a]->°न्-वत्- -वन्तम् हिश्रौ ३,६,२१; -वन्तौ आश्रौ १,५, २५; २,१, २५; १८,३; शांश्रौ; -वान् मीसू १०,४,२८[b].

वृधन्वती- -ती हिश्रौ २१, २, ४६.

वृधस्[a,c]- -धः आश्रौ २,३,१२†.

†वृधान- -०न आश्रौ ३, ८, १; -नः आश्रौ २,१५,२; ६,५,२५; शांश्रौ १०,१०, ८; शांगृ १,२५, ८[d].

*वृधुस्[e]->वार्धुषि[f]- -षिः वाध २,४२; बौध १, ५, ७९; -षी वाध २,४०; -षेः शंध ४३४.

वार्धुषिक[g]- पावा ४, ४, ३०; -कः वाध २,४१ф; शंध ३७७:२०; आपध १, १८, २२; बौध १,५, ७९; विध ५४, २६; हिध १, ५, ९१; -कस्य शंध ४२९; ४६१; -कान् बौध १, ५, ८०; -के वाध २,५०.

वार्धुषिक-कदर्य-दीक्षित-वन्धनिका(क-अ)भिशस्त-षण्ढ--ण्ढानाम् विध ५१,९[h].

?वृध्र,ध्रू[i]]- -ध्रम् आपशु २, ७;८; बौशु २ : १; ४; -ध्रस्य आपशु २,७;९; बौशु २ : ३;४.

वृन्त[j]- -न्तम् काशु ४,२.

वृन्ताक- पाउमो २,२,१४.

१वृन्द[k]- पाउमो २, २, १६६; -न्दम् निघ ४,३†; या ६,३४.

वृन्दारक,का- पावा ५,२,१२२; ७,३,४५; -कः या ६,३४.

वृन्दारिका- पावा ७,३,४५.

वृन्दारक-नाग-कुञ्जर- -रैः पा २,१,६२.

वृन्दिष्ठ[l]-, वृन्दीयस्[l]- पा ६, ४, १५७.

२वृन्द- (>वृन्दर- पा.) पाग ४, २, ८०.

√वृश् पाधा. दिवा. पर. वरणे.

१वृश- पाउ ४,१०४.

२वृश[m]- -शाः ऋअ २,५,२[२]; बृदे ५, १४;१९; -शम् बृदे ५,१८.

√वृ,व्रश्च्[n] पाधा. तुदा. पर. छेदने, वृश्चति काश्रौ ६,१,१४; आपश्रौ १८,११,१०; बौश्रौ ४,१ :२२; माश्रौ; वृश्चतः माशि ८२†; वृश्चन्ति वाधूश्रौ ४, ५९[२] : ७; †वृश्चामि आपश्रौ ११,१५,१[०]; हिश्रौ १०,१,१३; वृश्चावः माश्रौ २, ३, ७, २[३]†[o]; †वृश्च,>श्चा आश्रौ २, ३, २३; शांश्रौ २, ७, १८××; काश्रौ; ऋअ ७, ३३; वृश्चेत् आपश्रौ ७, २, ६; बौश्रौ ४, १ : २७; माश्रौ ७, १, ७; ८[४]; ९[२]; वैश्रौ.

वृश्च्येत माशि ८२†.

वृश्चयति आमिगृ १,३,२:१६†[p];

वृश्चिक[a]- पाउ २,४०; -†कः अप ३२, १, १७; कौसू १३९, ८; -काः अप ६४,८,८; -कैः विध ४३,३४.

वृश्च्यमान- -नम् वैताश्रौ १०,२.

१व्रश्चन[q]- -नात् या २,६; १२,२.

व्रश्चन-प्रभव- -वान् शंध ४२७[r].

व्रश्चना(न-अ)भेद्य-प्रभव- -वान् विध ५१,३६[r].

२व्रश्चन[s]- -नाः गौध १७,३१[t].

व्रश्चित्वा पा ७,२,५५.

व्रश्चि(न>)नी[t]- -नी ऋअ २, ३, ८.

√वृष्(वधा.)[u] पाधा. भ्वा. पर. सेचने; चुरा. आत्म. शक्तिबन्धने, वर्षते अप ७०[२], १७, ३; १८, ३; वर्षति बौश्रौ †२,१७ : २३;२४; १३, ३९ : ५; वाधूश्रौ ३, ३८ : ४; ४,६५[२] : ११; ७४ : ५; ८४ : ४; वैश्रौ; वर्षन्ति कौसू ९४,१[१]; १४†; या ११, ४१; वर्षसि सु ७, ३; वर्षत् अप ६७, १, ६; †वर्षतु काश्रौ २,६,११; आपश्रौ; †वर्षन्तु बौश्रौ १८, १८ : १३; द्राश्रौ ९, १, १६[v]; लाश्रौ ३, ५, १५[v]; आमिगृ २, ५, ११ : २७; वर्षेत अप ७०[२], ३, ४; वर्षेत् आपश्रौ †१६, ११, १२; १२; १९,२६,६;४××; बौश्रौ, ववर्ष बृदे ८, २; या २, १०; वर्षिष्यते हिश्रौ २२, ६,१६[w];

a) वैप १ द्र. । b) वृ° इति जीसं. प्रमृ. । c) =व्याहृति-विशेष- । d) पामे. वैप १, १३८४ i द्र. । e) माय. (वृद्धि-) । कुसिः प्र. उसं. (पाउ २, १२०) । f) =वार्धुषिक- । इञ् प्र. उसं. इति विशेषः । g) नाप. (गर्ह्योत्तमर्ण-) । ठक् प्र. उसं. [पा ४, ४, ३० (वैतु. पावा ४, ४, ३० <वृधुषि- [<वृद्धि-] इति; पाका. [पक्षे]<वृधुषि- इति)] । h) °बद्धनिगडाभिशस्तषण्डानाम् इति जीसं. । i) क्वचित् आपशु. पाठः । j) =वृत्तचतुरस्र- इति भाष्यम् । k) =समूह- । l) पाप्र. < वृन्दारक- इति । m) =ऋषि-विशेष- । n) पा ६,१,१६; ८, २,३६ परामृष्टः द्र. । o) परस्परं पामे. । p) पामे. वैप १ २२९७ j द्र. । q) भाप. । r) परस्परं पामे. । s) कर्मणि ल्युट् । t) =ऋतु- । u) पा ६,३,११६ परामृष्टः द्र. । v) पाठः? वर्षयन्तु इति शोधः (तु. वैप १ वर्षयन्ति [श्रौ ९,१,९]) । w) °ष्येत इति पाठः? यनि. शोधः (तु. वर्षिष्यति इति आपश्रौ. प्रमृ.) ।

वर्षिष्यति आपश्रौ १९, २५, २२; २७,३; बौश्रौ १३, ३८ : ५; ३९ : १६; १८; हिश्रौ २२, ६,४.

†वर्षयथ>था[a] आग्निगृ २, ५, १० : ३०; तैआ ३, १०; वर्षयन्तु बौश्रौ ८, १० : २†; वर्षयेत् अप ६५,३,८.

†अवीवृषत[b] शांश्रौ ४,४,१४; ९,३.

†वृषाय[c] ऋप्रा ९,४९.

२वर्ष[c]->वर्षिमन्- पा ५, १, १२२.

वर्षिष्ठ, ष्ठा[c]- पा ५, १, १२२; ६,४,१५७; -ष्ठः शांश्रौ १६, २४, १०; काश्रौ ८, ८, १९; बौश्रौ; -ष्ठम् काश्रौ ५,१३,३†; ६,७,८; आपश्रौ; बौश्रौ ११, ७:३०†[d]; हिश्रौ १३,१,४६†[d]; द्राश्रौ १५,४,६†[d]; लाश्रौ ५, १२, १३†[d]; -ष्ठया या ११, १४†; -ष्ठा शांश्रौ १६, २४, १०; आपश्रौ; -ष्ठा. हिश्रौ ७, ७,१२; -ष्ठात् काश्रौ ८,८,२२; -ष्ठानि बौश्रौ १६, १२ : ८; -†ष्ठे बौश्रौ १, १० : ८××; माश्रौ; पा ६, १, ११८; -ष्ठेन या ११,१४.

वर्षिष्ठ-रत(ता>)त्न[e]- -त्नः काश्रौ १६,१,९.

वर्षिष्ठ-समिध्- -मिधौ वैगृ १,२१ : २.

वर्षिष्ठा(ष्ठ-अ)णिष्ठ- -ष्ठयोः ऋप्रा १७,३९.

वर्षिष्ठीय[f]- >°य-प्रस्थ[g]- -स्थे बौश्रौ १८,४९ : ३;६.

वर्षीयस्[c]- पा ५,१,१२२; ६, ४,१५७; -यः काश्रौ ८,३,१९; आपश्रौ १५, ३, ११; बौश्रौ; -०यः वाश्रौ १, ६, ४, ३५†[h]; -यसः आपश्रौ १४,६,८; वाश्रौ १, ६, ४, ३५†[i]; ३, २, ६, ३०; काशु २, २७; आपशु; -यसःऽ-यसः हिश्रौ ९,८,२४; २६; २७; -यसा आपगृ १३, १०; काठगृ २४, ५; बौगृ; -यसि काश्रौ ६, ५, १४†[i]; आपश्रौ १५,९,८; माश्रौ; याशि २,१६†[i]; -यांसः माश्रौ ५,२, १२,१४; -यांसम् आपश्रौ १४, २१, ३; बौश्रौ ५, ११ : ३; हिश्रौ १५, ५, २२; -यांसौ आपशु २१, १; हिशु ६, ६०; -यान् काश्रौ १०, ९, २[१]†, शांश्रौ १६,५,१[५]†, आपश्रौ.

वर्षीयसी- -सी शांश्रौ १, १७,११; १०, २२, २; आपश्रौ १५,५,१०; बौश्रौ; -सीः बौश्रौ १०, ११ : १२; १९; १९, १: १८; बौपि १,१५ : १२; -सीम् आपश्रौ २,२,९××, बौश्रौ.

३वर्ष[c j]- पागृ२.४,११;५,१,३९[k]; -र्षम् आपमं २,१७,२४†; माग़ृ १,४,६; वागृ ८, ६; ११; जैगृ, कौसू १४१,४३; -र्षस्य †माश्रौ २, ९, ३; ४; बौश्रौ १३, ३८ : ३†; माश्रौ ५,२,७,९; -र्षाय अप ५२, ९, ३; -र्षेण कौसू १३७, २३†; १४१, १८; या २,९; -र्षैः वैगृ १,५ : ३.

२वार्षिक- पा ५, १, ३९; -कम् माश्रौ ५,२,६,१९.

१वर्ष-कर्मन्[l]- -र्म या २,८;१६; -र्मणा या २, ८;७, २२; २३; १४,१६; २१.

वर्षकर्म-वत्- -वतः या १०, ११.

२वर्ष-कर्मन्[m]- -र्मा या ९,२२.

वर्ष-काम- -मः द्राश्रौ ९, १, १९; लाश्रौ ३, ५, २०; कौसू ४१,१; या ९, ६; -मस्य निसू २,४ : १२; -माः या ७,२३; -माय कौसू ९८,२†.

वर्षकाम-सूक्त- -क्तम् या २,१०.

वर्षकामे(म-इ)ष्टि[n]- -ष्टयः आश्रौ २,१३,३[o]; -ष्टिः आश्रौ २,१३,१.

वर्ष-ज- पा ६,३,१६.

वर्ष-धारा- -रासु आपध १, १५,४; हिध १,४,६३.

वर्ष-निग्रह- -हः अप ६३,१,७.

वर्ष-निर्णिज्[e]- -र्णिजः साश्रौ ८,१३,१†.

वर्ष-परीत- -तः कौसू ३८,७.

वर्ष-प्रतिबन्ध- -न्धे पा ३,३,५१.

२वर्ष प्रमाण- -णे पा ३,४,३२.

वर्ष-वत् शांगृ ४,७,५[p].

वर्ष-वर्जम् बौगृ ३, ९, ४९[p];

---

*a*) सपा. मै २,४,७ वर्षयत>ता इति पाभे.। *b*) शोधः पाभे. च वैप १,७११ l द्र.। *c*) वैप १ द्र.।
*d*) पाभे. वैप १ वर्षिष्ठम् ते १, ७,८,१ टि. द्र.। *e*) विप.। *f*) स्वार्थे छः प्र. उसं. ( पा ५,१, १०५ )।
*g*) कस. उप. = सानु-। *h*) पाभे. वर्षीयः ते १,३, ८,२ टि. द्र.। *i*) = सपा. मै १,२,१५। मा ६, ११ प्रमृ. तु वर्षीयसि इति पाभे.। *j*) = वृष्टि-। *k*) वर्षा- इति भाण्डा. प्रमृ.। *l*) मलो. कस.। *m*) बस.।
*n*) = कारीरी-इष्टि-। *o*) °ष्टयः इति पाठः? यनि. शोधः। *p*) परस्परं पाभे.।

वौध १,११,२५.
वर्ष-विद्युत्-स्तनयित्नु-संनिपात- -ते गौध १६,४१.
†वर्ष-वृद्ध[a]- -द्धम् काश्रौ २,४,१६; आपश्रौ १, २०, ५; ६; बौश्रौ; -०द्धाः आपश्रौ १, २०,६; वैश्रौ ४,७ : ५; वाश्रौ १,२,४,५; हिश्रौ १,५,६०.
वर्ष-वैकृत- -ते अप ७०[२],१९,२.
वर्षा(र्ष-आ)राव-गत- -तम् अप ५९,१,१९.
वर्षा( र्ष-अ )वर्ष[b]- -र्षम् अप ५०,१,२.
वर्षे-ज- पा ६,३,१६.
१वर्ष्य, र्ष्या[a]- -र्ष्यम् आपश्रौ ८, २२, ६; माश्रौ ८, २४, ७; हिश्रौ ५,६,१२; -र्ष्यस्य निसू ३, ९ : ५१†; -र्ष्याः बौश्रौ १२, ८ : १३[c]; कौगृ ५, ५, ६†; या २, ११†; -र्ष्याणाम्[c] आपश्रौ १८, १३, १०; हिश्रौ १३, ५, १४; -†र्ष्याय बौश्रौ १०,४८ : ९; वाश्रौ २,२,३,५; वैश्रौ १९, ६ : ४०; -र्ष्ये आपश्रौ ८,२२,५.
वर्षण- -णात् या ९, २२.
वर्षत्- -र्षति काश्रौ १८, ६, २४; आपश्रौ १७, २४, ३; बौश्रौ; कौगृ ३,९,२४[d]; -†र्षन् आपश्रौ १९,२६,१[e]; बौश्रौ १३, ३८ : ६[e]; हिश्रौ २२, ६, ५[e]; आमिगृ २, ५, ११ : १२[e]; ङ्ग्या ३,१०; ५,१९; -र्षन्तः अप ६२, ३,२; -र्षन्तम् गोगृ ३,२,१६.
वर्षा[a]- पाग ४, २,६३; ५,१,३९[f]; -र्षाः काश्रौ ४, ७, ७; आपश्रौ, वैध ३, ६,८[g]; या ४,२७[2]‡; ७,११; -र्षाणाम् बौश्रौ १८,५२ : ६; माश्रौ १,४,१,२७†; वाश्रौ १, १,३,१; -†र्षाभ्यः आपश्रौ २०, १४, ५†; आपमं; आगृ ४, ५, ७; -र्षासु शांश्रौ २, १,३; १६,९,२९; काश्रौ.
३वार्षिक,का[a]- पा ४, २, ६३;३,१८;१९;५,१,३९; -कम् आगृ ३, ५, १९; गौध १६, १; ४०; -काः आश्रौ ४, १२, १; आपश्रौ २०, २३, ११; बौश्रौ १५,३८:१२†; वाधूश्रौ ४,२९[2]: ८; -काणि वृदे ८, ६; -कात् वौध १, ११, २४[h]; -?कानि वौगृ २, १०, ४; -काभ्याम् शंध १६०; -केभ्यः शांश्रौ ९, २७,१; -कैः वौगृ २, १०, ४; -कौ अस १५,४[2]†.
वर्ष(र्षा-ऋ)र्तु- -र्तौ हिध १,३, २१.
वर्षा-काल- -ले वौध १, ११, २५.
वर्षा(र्षा-आ)दि- -दौ वौगृ २, १०,४.
वर्षा-रात्र- -त्रम् काश्रौ ४, ६, १९; हिश्रौ ६,८,१.
वर्षा-भू[i]- -भूणाम् आमिगृ २, ५,१० : ३; ११; -भ्वः पा ६, ४,८४.
वर्षा(र्षा-अ)र्थ- -र्थे काश्रौ ४, १६.
वर्षा-शरद्[j]- -दम् आपध १ २२,१; हिध १,८,४२.
वर्षाशारदिक[k]- -कम् वै १,१४ : १५.
वर्षासु-ज- -जः पावा ६,३,१.
†वर्षा-हू[a]- -ह्वाम् आपश्रौ १९ २७,७; हिश्रौ २२,६, १८; तैब्रा ३,५†.
वर्षाह्व[l],ह्वु[l])-स्तम्ब- -म्बः बौश्रौ २३, ४ : १४; -म्बम् आपश्रौ १९, २७,७; बौश्रौ १३, ३७ : ४××; हिश्रौ २२,६, १८; -म्बस्य बौश्रौ २३,४ : १३.
वर्षा(र्षा-आह्व>)ह्वा[m]- -ह्वा आमिगृ २,५,१० : ३८.
वर्षितृ- -ता या ४, ८; ११, ४०; -तुः या ७,२३.
२वर्षुक- पा ३, २, १५४; -†काः आपश्रौ १२,११,३; १३, ९, ९; बौश्रौ ८, ९ : २३; वैश्रौ.
वर्ष्म[n]- -†र्ष्म[o,p] शांश्रौ ४,२१, ३; आगृ १, २४, ८; मागृ १,९,८; वागृ ११, ७; -र्ष्मः[p,q] पागृ १, ३, ८†[q]; -र्ष्माः[r] शांश्रौ १२, १४,२†.

a) वैप १ द्र. । b) समाहारे द्वस. । c) परस्परं पाभे. । d) सपा. शांगृ ४, ७,२९ प्रावर्षिणि (परि.) इति पाभे. । e) =सश. तै २,४,७,१ । मै २, ४,७ तु ववर्ष्वान् इति, काठ ११,९ ववृष्वान् इति च पाभे. । f) पृ २३०७ k द्र. । g) या° इति पाठः ? यनि. शोधः (तु. C.) । h) वर्षाकालात् इति चौसं. । i) =मण्डूक- । j) समाहारे समासान्तष् टच् प्र. । k) विप. (भत-) । ठञ् प्र. उसं. (पा ४,३,१८) । l) हिश्रौ. पाठः । m) =वर्षा-हू- । n) =उच्च- । कर्तरि मनिः प्र. (पाउ ४, १५२) । o) नैप्र.< वर्ष्मः इति (तु. सश. वर्ष्मः इति पाभे.; वैतृ. PW. प्रमृ. < वर्ष्मन्- इति) । p) पा. वृद्धौ वृत्तिः । q) वैतृ. PW. प्रमृ. °र्ष्मं इति शोधः । r) आप. । पा. येगे वृत्तिः । वैप १ खि ५,८,२ टि. द्र. ।

वर्ष्मन्[a]– पाउभो २,१, १८५; पाग ५, २,१७, –†र्ष्म बौश्रौ १४, १८:२६[?];२७; –र्ष्मणा बौश्रौ १४, १८:२७†; –†र्ष्मन् आपश्रौ ११, ५, १; बौश्रौ; ~०र्ष्मन् कौसू २१, २३†[b]; †र्ष्माणम् आश्रौ ४, १०, १; शांश्रौ ५,१४,८.

वार्ष्मण[c]– -णम् कौसू २३, ७.

वर्ष्म-ल– पा ५,२,१७.

वर्ष्मो(र्ष्म-उ)न्न– -न्नम् निसू ४,६ : १८.

२वर्ष्य– पा ३,१,१२०.

वावृषाण[d]– -णाः ऋप्रा ९,२६†.

१वृष(बप्रा.)[d,e]– पाग २,१,५६;५, १,१२३; ६,१,२०३; –षः माशृ २,७, ११[f], †वैगृ[f] ३, १० : ६; ११ : ३; अप ७१,६, ५[f]; विध ८६,१५[f]; शैशि १७६[g]; –षम् कौसू ७२,७[f]; अप ६८, २,११; विध ८५, ६७[f]; ८६, ९; १७; –षयोः जैश्रौका ४३; –†षाय वैगृ ५, ३ : २२; अप ४०, १, १३[h]; –षे बौश्रौ २, ५ : २२; कौगृ ३,६,१०; विध ९९, ११.

†वृष-क[i]– -कः[j] जैश्रौ ११ : १७; जैश्रौका १२६; द्राश्रौ ४, १,६; लाश्रौ २,१,५.

वृष-काम– -मः कौसू ५९, १३; अप्रा ६,८६.

वृष-ता– पा ५,१,१२२.

वृष-त्व– पा ५, १, १२२; –त्वाय हिश्रौ २२,४,१८.

वृष-दंश[d]– पाग ४, १, ८६[k]; –शः तैप्रा १६,११†.

वार्षदंश– पा ४,१,८६.

वृषदंशा(श-अ)तिमार्जन– -नम् अप ७२,३,७.

वृष-ध्वज[b,l]– -जः अप ४०,४,४.

वृष-पर्वन्[m,l]– -र्वणः बौध २,२, ७१.

वृष-पा(न>)ण[d]– -णासः आश्रौ ८,१,२†.

†वृष-पाणि[d]– -णयः आपश्रौ २०,१६,१०; हिश्रौ १४,३,३३; शुप्रा ४,७८.

वृष-म(न्यु>)ण्यु[d]– -ण्यवः ऋप्रा ५,५४†.

वृष-मन्त्र[m,l]– -०न्त्र वाधूश्रौ ३, ८८ : १२; –न्त्रः वाधूश्रौ ३, ८८ : ६;११.

√वृषय[d], वृषयेत् सु १३,५.

वृषयु[d]– -युः ऋप्रा ९,१५†.

वृष-वारण-मेघो(घ-ओ)घ-नेमि-दुन्दुभि-नि.स्वन[n]– -न. अप २४,२,५.

वृष-व्रत[d]– -तः आपश्रौ १२, ११,५†.

वृष-शील– -लः या ३,१६.

†वृष-सेन[a]– -न. आपश्रौ १८, १३, ५; बौश्रौ १२, ८ : ११; वाश्रौ ३,३,२, ११, हिश्रौ १३, ५,१४.

√वृषस्य पा,पावा ७,१,५१.

वृ(ष>)षा-कम्पन[l]– -नः या १२,२७.

वृषा-गिर्[d]– >वार्षागिर– -राः ऋभ २, १,१००.

वृ(ष>)षा-दर्भ– -र्भः ऋत ५,१,२.

वृषा(ष-आ)दि-युद्ध– -द्धम् विध ७१,२१.

वृ(ष>)षा-मोद(न>)नी[o]– -नी ऋत ५,१,२.

√वृषाय[d], वृषायस्व > स्ना ऋप्रा ९,५२.

†वृषायमाण– -णः अप ४६, ५,१; ऋप्रा ९, १६; शुप्रा ३, ११२.

वृ(ष>)षा-रव[d]– -वः ऋत ५, १,२; –वम्[p] काशिगृ ३,४,२ : ११; ५, ७ : १२; वौपि १, ६ : ७; –वाय ऋप्रा ९,२२†; –वेण[p] बौश्रौ १, ६ : १९; २०, ७ : ३; २४, २५ : १६†; वैश्रौ ४, ७ : २.

वृ(ष>)षा-शील– -लः या ३, १६.

वृषा(ष आ)श्व-शब्द—आदि– -दीन् वैश्रौ १३,४ : ९.

वृषा-हरि–>वार्षाहर[d]– -†रम् आपश्रौ १५,१४,२[q]; ३; बौश्रौ ९,१६ : १२[q], माश्रौ ११,१४, १[q];३, माश्रौ ४,४,२४[q,r]; वैश्रौ १३, १६ : ७[q], जैश्रौ; –रस्य

---

*a*) वैप १ निर्दिष्टयोः समावेशः द्र. । *b*) वैप १ वर्ष्मन् शौ ५,२,७ टि. द्र. । *c*) विप. । तत्रभवीयः अण् प्र. (तु. PW. प्रमृ.) । वर्ष्महतः तस्माज्जिहत इति दारिलः ! । *d*) वैप १ द्र. । *e*) विशेषः टि. द्र. । *f*) = पुं-गव- । *g*) = [उपचारात्] प्रमुख- (श्रेष्ठ-) । *h*) = शिव- । *i*) स्वार्थे कः प्र. । *j*) पाभे. वैप १ वृषा शौ ६,४८,३ टि. द्र. । *k*) तु. पागम. । *l*) बस. । *m*) व्यप. । *n*) द्वस.>बस. । *o*) = स्त्रा-मोदिनी- (तु. वैप १) । *p*) = अश्मन्- (तु. सपा. आपश्रौ १,२०,२) । *q*) = सपा. मै ४,९,११ । हिश्रौ २४, ६,४ तु °र्षाहा° इति पाभे. । *r*) °र्षाहा° इति BO. ।

आपश्रौ १५,१४,२; माश्रौ ११, १४,२; वैश्रौ १३,१६ : ९; जैश्रौ ५ : १३; -रे जैश्रौ २६ : १२.

वार्षाहरे(र-इ)ष्टाहोत्रीय[a]- -ये काश्रौ २६,७,३६.

वार्षाहार[b]- -रम् हिश्रौ २४, ६, ४†[c];५; १३; -रस्य हिश्रौ २४,६,४.

वृषिमत्- पा ५,१,१२२[d].

वृषो(ष-उ)त्सर्ग- -र्गः कौगृ ३, ६,१; शांगृ ३, ११, १; पागृ ३, ९,१; कागृ; -र्गम् अप १६, २, ३; -र्गे कप्र ३,७,६.

१वृष्य- पा ५,१,७.

वृषण[e]- -पाठमो २,२,१२४; -णम् आपश्रौ ९, ११,२३; आग्निगृ ३, १०, ५ : ८; बौपि ३, ८, १[f]; हिपि २३ : २५; गौपि २,१,१२; -णयोः शांश्रौ ४,१५,१६; काश्रौ २५,७,३३; कौगृ ५, ६, ५; -णे वैगृ ५,१२ : ९; -णौ विध ९६, ९२; या १४,७.

वृषन्[g]- पाउ १, १५६; -†षणः आपमं २,१६,१०; भागृ २, ७ : २६; हिगृ २,७,२; कौसू ४०,१४; -†षणम् आपश्रौ ७, १२, १४; बौश्रौ; माश्रौ २, ४, १, ३९[h]; -†॰षणा आश्रौ ४,७,४[i]; शांश्रौ ५, १०, ८[i]; बौश्रौ; -†षणे आपश्रौ ५, १३, ४[h]; बौश्रौ २, १७ : १८[h]; २५, २० : २५[h]; हिश्रौ ३, ४, १६[h]; कौसू ४०, १४; -†षणो काश्रौ ५,१, २३; आपश्रौ ७, १२, १२; बौश्रौ; -॰षणो या १२,३१†; -†॰षन् आश्रौ ६,३,१६; ८,१, २; १२; शांश्रौ; -†षभिः आपश्रौ १४, २९, ३; हिश्रौ १५, ७, १६; अप्राय ५, ६; या ५, ४; -षा †आश्रौ ७,८, ३; ८,१,१४××; शांश्रौ; निसू १, ५ : १९; ६, २ : १८[?]; सु २३, १; बृदे २, ६७[?]; ७, १४१; †या ६, १७; ११, ४०ф; १४, १६ф; -षाणम् आपश्रौ १५,१,६; बौश्रौ १८, ४० : ८†; माश्रौ; -ष्णः †आश्रौ ७,४, १२××; शांश्रौ; बौश्रौ ९, ३ : २४; १०, ६ : २; २२, २ : ८; पा ६, १, ११८; -ष्णा अप्राय ५,६; -†ष्णे आश्रौ ३,७,९××; शांश्रौ.

वृषण-अश्व[i,g]- पावा १,४,१८; -†श्वस्य जैश्रौ ३ : १५; द्राश्रौ १,३,३; लाश्रौ १,३,१.

√वृषण्य, वृषण्यति पा ७, ४, ३६.

वृषण्-वत्- -वन्तौ माश्रौ ५, १,२,११; १२; -†वान् तैप्रा १३,१३; माशि ६३.

वृषण्वती- -ती काश्रौ २५,१४,११; माश्रौ ३, ७, ४; निसू ७,७ : २५; -तीः आपश्रौ १४,१९,५.

वृषण्वत्-प्रवाद- -देन निसू ७,१० : ३३.

वृषण्-वसु[g]- पावा १, ४, १८; -॰सू बौश्रौ ७,३ : २†.

†वृषण्वि[g]- -ण्विः[j] अप ४८, १००; निघ १, १०.

वृषभ(,त्र[k])[l]- पाउ ३, १२३; -†॰भ, > भा आश्रौ ६,४, १०; १०, २, २०; शांश्रौ ९, १३, १; वैताश्रौ; -भः †आश्रौ १, १२, ३०××; शांश्रौ; वाध १७, ८; शंध २६८; विध ८६, १९; बृदे १, १११; साअ १, ५८१; या ७, ८†ф; ६,१७†; ९,२२†ф; शैशि २४८; आज्यो ५, १९; -भम् †आश्रौ ५, ५,१८; १०, २८; शांश्रौ; -भस्य आश्रौ १८, १९, ६†; बौश्रौ; गो २, २३; विध ८६, १३; †या ७, २३; ९, २४; -भाणाम् बृदे २, १४८; -भान् विध ५०, २५; -†भाय आश्रौ ३,८, १; आपश्रौ ५,५,८; बौश्रौ.

वार्षभ[m]- -भम् अप्र ४,५, ७,१११.

वृषभ-ध्वज[n]- -जः अप २०[?], १,१०; -जाय अप ४०, १, १३†.

?वृषभ-राज- -जाः विध ६७, ७†[o].

वृषभ-आकृत-पिण्ड- -ण्डैः वैगृ ३,१५ : १.

वृषभो(भ-उ)त्सर्जन- -ने कप्र ३,७,१.

a) साम्नोः द्वस. । b) =वार्षाहर- । उभयपद-वृद्धिरिति विशेषः । c) पामे. पृ २३०९ q द्र. । d) तु. पागम. । e) =अण्डकोश- । f) पृ॰ इति पाठः? यनि. शोधः (तु. आग्निगृ. प्रमृ.) । g) वैप १ द्र. । h) सपा. ॰षणम् <> ॰ष्णे (तै ३, २,५,२ तैब्रा १, २, १,२१ च) इति पामे. । i) व्यप. । j) =मेघ- । k) शैशि. पाठः । l) विप., नाप., व्यप. । वैप १ द्र. । m) =सूक्त-विशेष- । n) =शिव- । o) पामे. वैप १,१०१९ j द्र. ।

?वृषभो(भ-उ)षित[a]– -तम् वैगृ ३,१४ : २.

वृष्ट– -ष्टे माश्रौ ५,२,६,१३; कौसू १४१,१९; या ६,३६.

१वृष्टि[b]– पा ३,३,९६; पाग ३,४,७४[0]; –ष्टय: आग्निगृ २, ५, १० : २९†, कौसू ९४,१४[3]†; अप ६४,५,३; –ष्टये अप ५३,४,५;६३,४,८, ६५,२,७; –ष्टि: †आश्रौ १,७,७[2]××; †शांश्रौ २, ७, १८[d], ४, ८,३[d]××; काश्रौ; अप ५९, १, १५××; –ष्टिम् शांश्रौ ६,३,६†××;†आपश्रौ ४, ११,१; १७,१३,२[e]××; बौश्रौ; हिश्रौ १२,४,४[f]?[g]; –ष्टे: आग्निगृ २,५,११:६; अप ६५,३,७; या १४, ८; –ष्ट्या †आपश्रौ ३,५, ९; ५, २६, ५; भाश्रौ; वाधूश्रौ ४,४ : ८; –†ष्ट्यै बौश्रौ १३, ३८ : ११; माश्रौ ५,२, ६,७; वैताश्रौ १९,३; २१,१४; अप्राय ६,२.

१वृष्टि-काम– > °मे(म-इ)ज्या[f]– -ज्यया बृदे ८,५.

२वृष्टि-काम[b]– -म: शांश्रौ १४, १५,१[i]; काश्रौ, -मस्य आश्रौ ५,१,६; आपश्रौ.

वृष्टि-ग्रह– -हम् वाश्रौ ३,२,५, २१.

वृष्टि-ज– -जम् निसू ७, ७ : २१.

वृष्टि-दायिन्– -योनि अप ६५, ३,७.

†वृष्टि-द्यो[i]– -द्यावा आश्रौ १, ९,१; शांश्रौ १,१४,५; आपश्रौ ४,६,१; भाश्रौ ४, ८, १; हिश्रौ ६,२,९.

†वृष्टि-मत्– -मन्तम् आप्रा ८, ३०; –मान् माशि १०, १०, याशि २,७४; ९०.

वृष्टिमती[j]– -ती बौश्रौ १९, १० : २८.

वृष्टि-याचिन्– -चिनम् या २, १२.

†वृष्टि-वनि[j]– -नये[k] आपश्रौ १५,१०, २; बौश्रौ ९,९ : २७; भाश्रौ ११, ९, १८; –निम् आश्रौ ५, १, १५; शांश्रौ ६,७, १०; बौश्रौ ७,५ : ८; या २, १२.

वृष्टि-संस्राव[h]– -वम् निसू ७, ७ : २१.

वृष्टि-सनि[l]– -नय: वाश्रौ २, २, १, २५; –†नि आपश्रौ ६, ११, ५, बौश्रौ; –नी: आपश्रौ १७,५,५; बौश्रौ; †भाशि २५; ९९; तैप्रा ६,१२.

वृष्टि-हव्य[l]– > वार्ष्टिहव्य– -व्य: ऋअ २,१०,११५; साअ १,६४.

वृष्ट्य(ष्टि-अ)पेत– -त. वाअ ११ : ३.

वृष्ट्य(ष्टि-अ)र्थ– -र्थम् बृदे ८, ९.

वृष्ट्या(ष्टि-आ)कार– -रेण अप ५८[2],३,६.

२वृष्य– पा ३, १,१२०.

१वृष– √वृष् (बधा.) द्र.

२वृष[l]– पाग ४,१,१५४.

वार्ष्यायणि– पा ४,१,१५४; पावा ४,१,१५५; आपध १, १९, ५; २८,३; हिध १, ५, १०७; ७, ३८; या १,२.

वार्ष्यायणीय[m]– -यम् आपध १, १९,८; हिध १,५,११०.

वृषक– √वृष् (बधा.) द्र.

वृष-गण[l]– पाग ४, १, १०५; २, १११, –णा: ऋअ २, ९, ९७; साअ १,५२४; –णे पागवा ४, १,९९.

वार्षगण– पा ४,२,१११.

वार्षगणि[n]– -णि: बौश्रौप्र ४१ : १३.

वार्षगण्य– पा ४, १, १०५; –ण्य: द्राश्रौ २, २, ३३; लाश्रौ १०,९,१०; निसू २,८ : १३; ९ : ११; ३, १३ : २६××; –ण्यम् जैगृ १,१४ : १०.

वृष-ता– प्रमृ., वृषण–, वृषन्–, वृषभ–,वृषल– √वृष्(बधा.)द्र.

वृषय– पाउ ४,१००.

वृषल[l]– पाउ १,१०६; पाग ५, १, १३०; पावाग ५, ३, ६६; –ल: बौश्रौ १६, २२:६[l]; द्राश्रौ ११, ३,१; लाश्रौ ४,३,२; या ३,१६; –ला· या ३, १६; –लान् बौश्रौ

*a*) कर्थ: ? । पूप. = ओषधि°, उप. <√उष् [दाहे] इति C. ? (वैगु. भाष्यम् पूप. = इव- इति मत्वा उप. <√वस् निवासे इति वा गन्धने इति वा [तु. C. टि.])। *b*) = वर्षा- । *c*) तु. पामि. । *d*) = क्षिति- । <√मरष् (तु. सस्थ. टि. ?विषुत्)। *e*) पाभे. वैप १ वृष्टिद्यावानम् टि. द्र. । *f*) वृष्टि: इति पाठ: ? यनि. शोध: (तु. आपश्रौ १७,१२,२)। *g*) मलो. कस. । *h*) बस. । *i*) वैप १ द्र. । *j*) = ऋग्-विशेष- । *k*) मता. मा ३८,६ माश १४,२,१,२१ तैआ ४,८,४;५,७,७। मै ४,९,७ तु °सनये इति पाभे. । *l*) व्यप. । *m*) तस्येदमीयस् छ: प्र. । *n*) अपत्यार्थे इञ् प्र. उभयपदवृद्धिश्च ।

९, ५ : ३४; १३ : १०; –लाय †चौश्रौ २, १६ : ५१; १७ : ७; ४४; कौसू ९१, १९; –ले आगृ ४, २, १९; २१; –लैः गोगृ ३, ५,३४; जगृ १, १९ : २५; विध ६३, ४.

वृषली[a]– पाग ४, १, ६६; –ली विध २४, ४१; –लीम् अप १, ४९, २; अशां १३, २; –ल्यः काश्रौ १४, २, ३०; –ल्याम् शंध ४०१.

वार्षलि– पा ४, १, ९६.

वृषली-गमन– -नम् अप ९, ३,५.

वृषली-पति– -तिः शंध ४१४; आपध १,१८, ३३; बौध २,३,५२; हिध १,५,१०२; २, ५,४९; –तीन् आग्निगृ ३, ११, १ : १०; –तेः वाध १४,११.

वृषली-सेवन– -नात् विध ५३,९.

वार्षल– पा ५,१,१३०.

वृषल-वत् या ३,१६.

वृषला(ल-अ)न्न-वर्जिन्– -र्जी वाध १०,३१; बौध २,२,१.

वृषली√भू>वृषली-भूत– -तः जैगृ १, १२ : ३†.

वृष-शील–, √वृषस्य √वृष् (बधा.) द्र.

वृषाकपि[b]– -पिः अप ४८, १४२†; ऋअ २, १०, ८६; बृदे २,१०; ६७; ६८; अअ २०,१२६; निघ ५,६; या १२,२७∮; १३, ४[c]; ऋत ५,१,२†; –पिना आश्रौ ८, ४,२; –पिम् आश्रौ ८,३,४××; शांश्रौ १२,६, १३××; १३,२[b]; बौश्रौ; –†०पे या १२,२८;१३, ३; –पेः या ११, ३९†; १२,८; –पौ शांश्रौ १२,२४,३; बौध १, ६,९; ऋप्रा ८,२६.

वृषाकपायी[b]– पा ४,१,३७; –०यि या १२, ९†; –यी अप ४८, १४४†; बृदे २, ८; ८०; ७, १२०; १२१; निघ ५, ६†; या १२,८; –यीम् बृदे २, १०.

वार्षाकप– -पम् बृदे ७, १४१; –पे बृदे २,६९.

वृषाकपि-वत् वैताश्रौ ३२, ३१.

†वृषाञ्जु[b]– -ञ्जुम् शांश्रौ १२, १६, १.

वृषा-गिर्– प्रमृ. √वृष् (बधा.) द्र.

वृषाणक[d]– -कः ऋअ २, १०, १३६.

वृषातकि– -केः[e] चाअ ४२ : ८.

वृषादर्भ– प्रमृ. √वृष् (बधा.) द्र.

वृषी[f]– -षीम् गोगृ ४,२,२४.

वृष्ट–,१वृष्टि– √वृष् (बधा.) द्र.

२वृष्टि–(>वार्ष्टर्य– पा.) पाग ४, २, ८०.

१वृष्णि[g]– पाउ ४,४९; –ष्णिः आश्रौ ५, ३, ३; शांश्रौ; बौशु ८ : ४†; भाशि ६४†; –ष्णिना अप्राय ५, ६; –ष्णिम् आपश्रौ १२,१८,१४;१९,२,१; काश्रौसं; –ष्णेः काश्रौ ५,४,१५; आपश्रौ १६,२७,११××.

वृष्णि-बस्त[h]– -स्तः हिश्रौ २२, ४, १७; –स्तम् हिश्रौ ११, २,१.

वृष्णिय[a]– -यम् वाधूश्रौ ४, ६८ : ५; भाशि ६४†[i].

†वृष्णि(य>)या-वत्– -वतः बौश्रौ ८,१४ : ३७; हिश्रौ ९,४, ३१; तैप्रा ३,५.

वृष्णि-वासस[j]– -सम् बौश्रौ १८, १६ : ३; १९ : ३.

†वृष्ण्य[a]– -ष्ण्यम् आपश्रौ १२, १९,५; जैश्रौ १४ : २४; कौसू ६८, १०; अप्रा ३, ४, १; –ष्ण्यानि कौसू ६८,१०.

†वृष्ण्या-वत्[a]– -वतः जैश्रौ १९ : १८; या १, ११∮; –वान् ऋप्रा ९, १७.

†वृष्ण्यावती[a]– -०ति कौसू ४०,१४.

२वृष्णि[k]–>वार्ष्णेय– -याः बौश्रौप्र ४८ : ११.

वृष्णिक–(>वार्ष्णिक– पा.) पाग ४, १,११२.

वृष्णिय– १वृष्णि– द्र.

वृष्णिवृद्धि[l]– (>वार्ष्णिवृद्ध– > ०द्धायन–).

१-२वृष्य– √वृष् (बधा.) द्र.

वृस[m]–(>वृसी–)

√वृह्(बधा.[=√बृह्.])पाधा.तुदा.पर. उद्यमने, वृहति[n] आपध १,१३, २४; हिध १, ८, ६५; या ५,४[o].

वृढ–(>वार्ढ्य– पा.) पाग ५, १, १२३.

वृढ-ता–, ०त्व–, वढिमन्– पा ५, १,१२३.

---

a) वैप १ द्र. । b) न्यूङ्खप्रकारेण निर्देशः । c) द्विपदः शोधः वैप १,२४६५ e द्र. । d) व्यप. । e) पाठः? यनि. शोधः । f) = १आसन- । g) वैप १ निर्दिष्टयोः समावेशः द्र. । h) मलो. कस. । i) सपा. ऋ १,९१,१६ वृष्ण्यम् इति पाभे. । j) मलो. कस. समासान्तष् टच् प्र. । k) = वंश-विशेष- । l) पृ २२७७ m द्र. । m) पृ १६४२ f द्र. । n) धा. हिंसायां वृत्तिः । o) बृहति इति ल. ।

√वे[a] पाधा. भ्वा. उभ. तन्तुसंताने, †वयत[b] आपश्रौ १९, १७, १३; बौश्रौ ३,३० : १३; हिश्रौ २२, १,२४; अप्राय १,३; †अवयन् आपश्रौ १४, १२, ४; हिश्रौ १०,६,९; आपमं; वागृ ५,९[c].
ऊतुः अप्रा १४,५०‡.
ऊत,ता- -ते काठश्रौ ११८; कागृ ४५,६; -ताम् काश्रौ ७,९,२४.
वय(त्>)न्ती- -न्ती या ४,११‡.
१वेमन्[d]- पाउ ४, १५०; पाग ५, २,१००.
वेम-न- पा ५,२,१००.
√वेक्ष्[e]
१-२वेग-, १वेगवेजम् √विज् द्र.
?वेच्छाहि काश्रौसं ३१ : ११.
वेजन- √विज् द्र.
वेद्[f] काश्रौ १८,३,५‡[g].
वेट्- ( > √वेट्य पा. ) पाग ३,१, २७.
वेट[h,i]-(>वेट-वत्- पा.) पाग ४,२, ८६[j].
१वे(ट>)टा-वत्[i,k]- पाग ६, ३, ११९.
१वेटा-(> √वेटाय पा.) पाग ३,१, २७[l].
२वेटा[j]-(>२वेटा-वत्- पा.)
√वेण् पाधा. भ्वा. उभ. गतिज्ञान-चिन्तानिशामनवादित्रग्रहणेषु.
वेणि,णी- पाउ ४, ४८; -णिः बाध १६,१६[m], -णिम् काश्रौ ७, ३, १२[n]; -णी[n] बौश्रौ ६, १ : ३; वैश्रौ १२,८ : १३; हिश्रौ ७, १, ४९.
वेण्या(णी-आ)प[o]- -पाः अप ३१, ९,१.
१वेणु[i,p]- पाउ ३,३८; पा ६,१,२१५; पाग ४, २, ८०[q]; ८६; ९१; ३, १३४; ४, १०३; ५, १, १२२; ६,४,१५३; पावा ६, १, २१५; -णुः आगृ ३, ८, २०‡; तैप्रा १३, ९‡; ऋत ४, ७, ६; -णुना आपश्रौ १५, २, ११; १६,१७,८; बौश्रौ १०,१९ : ७; भाश्रौ; -णुम् काश्रौ १८,२,१३; माश्रौ ६,१,५,३०; कौगृ २, ६, ९; आपशु; -ण्वोः अप २३, ९, ५; आपशु ८,१२; ९, १[l]; बौशु ८ : ११; हिशु ३,१७; नारि १, ५,१; -णौ काश्रौ १८,२,१०.
१वैणव- पा ४, ३, १३४; -वः काश्रौ ४,६,१८; अप १८,३, ५; -वम् भाश्रौ १, २२, १; आगृ ३,८,२०; शांगृ ३,१, ११; पागृ २, ६, ३१; वैगृ; बौध १, ३, ३[q]; वैध २, ३, २[r]; -वाः आपश्रौ १५, ५, १३‡, भाश्रौ ११, ५, १७‡; माश्रौ; -वानाम् बौध १,५, ३०; -वानि आपश्रौ १५, ५, ११; वैश्रौ १३, ७ : १६; हिश्रौ २४, २, ५; -वेन कौसू ३२,८.
वैणवी- -वी काश्रौ १६, २, ५; वाधूश्रौ ४, १०४ : १, वाश्रौ ८, २, ६; काशु ७, ११; -वीम् आपश्रौ १६,१, ७, १७, २६,१४; बौश्रौ ९,१ : १; भाश्रौ ११,१,३; माश्रौ; -व्या माश्रौ ४,१,११.
१वैणव-दण्ड- -ण्डम् वैध ३, १,१[s].
वैणवदण्ड-धारिन्- -री कागृ ३,११.
२वैणव-दण्ड[t]- -ण्डानि बौश्रौ ९,५ : ५.
वैणवा(व-अ)न्त[t]- -न्तान् आग्निगृ २,७,११ : ९.
१वैणुक- पा ४,४,१०३.
वेणिमत्- पा ५,१,१२२.
१वेणुक- पा ४,२,८०; पावाग ४, २,१३८; -कः वैध ३,१५,३[u].
वैणुकीय- पावा ४,२,१३८.
वेणु-काण्ड- -ण्डम् बौश्रौ ९, १ : ६; १८; -ण्डेन आपश्रौ २१, १८,९; बौश्रौ ९,३ : १७.
वेणु-कार[u]- -राणाम् बाधूश्रौ ३,७६ : १५.
वेणुकीय- पा ४,२,९१.
२वैणुक- पा ६, ४, १५३.
वेणु-दण्ड-> ण्डा(ण्ड-अ)ग्र-तस् (:) वैश्रौ १९,६ : ३१.
वेणुदण्डो(ण्ड-उ)पवीत-कमण्डलु-वल्कला(ल-आ)दि-शीन् वैध २, १, ६.
वेणु-दल[v]- -लेन विध ७१,८२.
वेणु-पर्वन्- -र्वणा आपश्रौ १५,१,४;

a) या ५,२८ पा २,४,४१; ६,१,१५; १८-४१; ७, ३,३७ परामृष्टः द्र. । b) =सपा. ऋ १०, ५३,६ प्रमृ. ऐब्रा ३,३८ : काठ १३, ११;१२ तु वयसि इति पाभे. । c) °वा° इति पाठः? यनि शोधः (तु. आपमं. प्रमृ.) । d) वयन-साधनाऽन्यतम- । e) पृ २२७५ e द्र. । f) वेप १ द्र. । g) पाभे. वेप १(परि.) वृद् तं ४,६,१,४ टि. द्र. । h) =पीलुवृक्ष- । i) तु. पागम. । j) २वेटा- इति पाका. । k) =पर्वत-विशेष- । l) वेटाकार- इति केचित् । m) =संग्रह- संगति- । n) =[वेण्याकारा-] मेखला- । o) कर्पः? । p) = १वंश- । q) °वद्° इति मैसू. । r) °ण्ण° इति पाठः? यनि. शोधः । s) °वंद° इति C. । t) विप. । बस. । u) =जाति-विशेष- । v) उप. =खण्ड- ।

भाश्रौ ११, २, २७; वैश्रौ १३, ३ : १५; हिश्रौ १६,६,१५;२४, १,१६; -वैणाम् वैश्रौ १८, १ : ७१; -वैभिः आपश्रौ १५, ३, १६; माश्रौ ११, ३, ९.
वेणु-प्रियङ्गु-नीवार- -रैः वैश्रौ ८, २:७.
वेणु-मत्- पा ४,२, ८६.
वेणु-यव[a]- -वाः बौश्रौ २४,५:१८; -वान् आपश्रौ ६, ३१, ९; -वानाम् आपश्रौ ६, ३१, ८; माश्रौ १, ६, ४, २६; हिश्रौ ३, ८, ८४[?b]; माशृ २, ३, १२; -वेषु आपश्रौ ६, ३१, ९; -वैः आपश्रौ ६, ३१, १४[†].
वैणुय(व>)वी[c]- -वी शांश्रौ ३, १२, २.
वेणु-यष्टि- -ष्ट्याम् काश्रौ ५, १०, १८.
वेणु-रिक्त- -क्तयोः पावा ६,१,२०४.
वेणु-वीणा-वादिन्- -दी वैध ३, १५,३.
वेणु-वीणा-स्वर- -राणाम् नाशि १, ३,१.
वेणु-वेत्र-करीपक- -केषु वैश्रौ ११, ९ : ३.
वेणु-श्यामाक-नीवार- -राः आपश्रौ १६, १९, १३.
वेणुश्यामाकनीवारा(र-आ)दि- -दिभिः आग्निगृ २,७,१० : ६.
वेणु-सहित- -तम् अशां १३, ३.
वेण्व( णु-अ )ङ्गार- -रैः आपश्रौ १६, ४, १; माश्रौ ६,१,२, ३; वाश्रौ २,१, १, ३४; वैश्रौ १८, १ : ६०; हिश्रौ ११, १, ४४.
२वेणु[d]- -णून् अप १,६,१०; -णूनाम् आश्रौ १२, १४, ६.
२वैणव- -०व आश्रौ १२,१४,६.
१वेणुक- १वेणु- द्र.
२वेणुक[e]- -कः सु २३,५.
वेतन[f]- पाउ ३,१५०; पाग ४,४,१२; -नम् विध ८६,१८.
वैतनिक- पा ४,४,१२.
वेतस[g]- पाउ ३,११८; पाग ४, १, ४१;२,९१; ६, ४, १५३; -सः आपश्रौ १७, १८, १[†]; -[†]सम् वैताश्रौ २९, १३; अप ३७, ८, २; अअ १०, १०; १८,३.
वैतसी- पा ४, १, ४१.
१वैतस[h]- -सः वाधूश्रौ ३, ७६ : ३५; -सम् काश्रौ १३,२, २७; आपश्रौ २०, २, २; बौश्रौ १२, ८ : १; १३,३७:४;९; १५,१४, ९; माश्रौ; -सानाम् अप ६५, ३,८; -से काश्रौ १९, २, १२; आपश्रौ १८,१३,२१; २०,२१, १; वौश्रौ; -सेन आपश्रौ २०, २१, ६; हिश्रौ १४, ४, ५१.
वैतसी- -सीनाम् अप ३६,२२, १; ६५, ३, ३; -स्यः अप ६५,३,२.
वैतस-शमीमय- -यौ आग्निगृ ३, ८, ३ : १२; बौपि १, १५: ८४.
वैतस-शाखा[i]- -खया आग्निगृ ३, ६, ३ : ९; -खाम् आग्निगृ ३,६, ३ : ५.
वैतस-समिध्[i]- -मिधाम् आग्निगृ २, ५, १० : ४.
वेतस-कट- -टेन काश्रौ २०,२,२.
वेतस-काण्ड- -ण्डेन आपश्रौ २१, १८,९.
वेतसकीय- पा ४,२,९१.
वैतसक- पा ६,४,१५३.
वेतस-माला->[°]लिन्- -लिनः हिपि ११ : ३.
वेतस-शाखा- -खया आपश्रौ २०, १३,११; माश्रौ ६, २, ४, ११; वाश्रौ ३, ४, २, २४; हिश्रौ; -खाभिः कौगृ ४, १, ९; -खाम् आपश्रौ १७,१२, ७; बौश्रौ १०, ४७ : १६; ४८ : ३३; वाश्रौ २, २, ३, १७; वैश्रौ १९, ६ : ५३; हिश्रौ १२, ४,१; बौपि १, ११: ५; -खायाम् आपश्रौ २०, १७, ८; १८,१५; -खासु काश्रौ २०, ८,२.
वेतस्वत्- पा ४, २, ८७.
वेतस्वि(न्>)नी[j]- -नीः माशृ २, १३ : १४; हिगृ २, १२, १०.
वेताल- पाउभो २, ३, १०५.
वेताली-(>°ली√कृ पा.) पाग १, ४,६१.
वेत्तवै √विद् (लाभे) द्र.
१वेत्तृ- √विद् (ज्ञाने) द्र.
२वेत्तृ- √विद् (लाभे) द्र.
?वेत्तोदि चाअ ४१ : ३[†].
वेत्र[k]- पाउ ४,१६७; पाग ४,२, ९०; ९१; ६, ४, १५३; -त्रेण कौसू ४०,१०.
वेत्र-क- (>वैत्रकीय- पा.) पावाग ४, २, १३८.

a) पस. उप. = ३यव- । b) °णुयानाम् इति पाठः? यनि. शोधः (तु. भाष्यम्) । c) = आहुति-विशेष- [तु. MW.] । तस्येदमित्यर्थे अण् प्र. । d) व्यप. । e) = असुर-विशेष- । f) = भृति- । व्यु. ? । <√वी इति अभा. । g) वैप १ द्र. । h) विप. । विकारार्थे प्र. । i) कस. पूप. पुंवद्भावः । j) विप. (नदी-) । मत्वर्थे ड्विनिः प्र. उसं. (पा ५,२,१२२) । k) = वेतस- । व्यु. ? ।

वेत्रकीय– पा ४,२,९१.

वैत्रक– पा ६, ४, १५३.

वेत्र-व(त>)ती[a]– -त्याम् विध ८५, ४४.

वेत्र-वीत[b]– -तम् हिश्रौ १३, ४, १२[c].

वेत्र-वेष्टित– -तम् आपश्रौ १८,१०, २७[c].

वेत्रीय– पा ४,२,९०.

वेत्स्यत्– √विद् (लाभे) द्र.

१-२वेद– प्रमृ. √विद् (ज्ञाने) द्र.

३वेद[d]– पाग ५,१,२[e]; ६, १, १५६; -†॰द शाश्रौ १, १५, १२; बौश्रौ ३, ३० : १; भाश्रौ १, ६, ४; हिश्रौ १, ७, ७२; -दः †भाश्रौ १, १०, ३[f]; ११, १[f]; शाश्रौ १, १५, १२[f]; १३; काश्रौ; -दम् आश्रौ १, १०, २; ११, १; ४, १२, ६; शाश्रौ; काश्रौ ३,४,२ : १२[f]; बौपि ३, ३, १२[f]; हिपि ६ : ७[f]; -दस्य बौश्रौ २०, ३ : १४; -दात् आपश्रौ ३,१४,५; भाश्रौ ३,९,२; वैश्रौ; -दाभ्याम् बौश्रौ ५, ७ : २; ९, ५ : २५; १५ : १; वैश्रौ ८, ११ : ९; -दे शाश्रौ १, १५, ११; ८, १२, ९; आपश्रौ १३,१८, ४, बौश्रौ; -देन काश्रौ १,१०, ६××; काठश्रौ १, २३, ६××; २, १२, ७[g]; -दौ आपश्रौ ८, ५, ४; १५, ५, १८; बौश्रौ ९, ५ : ८; भाश्रौ ११, ५, २१; वाधूश्रौ.

२वेद-कर्मन्– -र्मणः हिश्रौ १,४,११.

वेद-कूर्च[h]– -र्चम् वैगृ ५, ४ : ३५[f].

वेद-तृण– -णम् काश्रौ ३, ७, ११; -णानि आश्रौ १, ११, ४; ९; वैश्रौ ७, १४ : १; हिश्रौ ६, ४, ३०; -णैः आश्रौ १,११,५.

वेद-दैवताक[i]– -कम् अप्र ७,१८.

वेद-निधाना(न-आ)दि– -दि वैश्रौ १०,१० : १५.

वेद-परिवासन– -नम् बौश्रौ १, ४ : ११; -नानि आपश्रौ १, ६, ६; बौश्रौ १, १२ : २; हिश्रौ १, २, ७६; -नेषु बौश्रौ २०,१० : १.

वेद-प्रत्व[j]– -त्वान् वाश्रौ १, २, ४, ४; -त्वै. वाश्रौ १,३,२,१२.

वेद-प्रलव[j]– -वानाम् माश्रौ ४, २, ७; -वान् माश्रौ १, २, ५, २; ४,२,६; १७.

वेद-प्रान्त– -न्तैः हिश्रौ १,७,१.

वेद-प्रासन[k]– -नम् आपश्रौ १२, २५,१३.

२वेद-मूल[l]– -लानि वाश्रौ १,३,१, ३६.

वेद-योक्तृ– -क्तृ शाश्रौ १,१५,११.

वेद-शिरस्– -रः वाश्रौ १, २,२,३; -रसा भाश्रौ १, ११, २; माश्रौ १,२,६,२१.

वेद-शेष– -षम् शाश्रौ १,१५,१६.

वेद-समवत्तधानी[m]– -नी वैश्रौ १०, ७ : १.

वेद-स्तरण– -णम् काश्रौ ३,६,२३; आपश्रौ ४,१६,९.

वेदा(द-अ)ग्र– -ग्राणि आपश्रौ २, ४,२; भाश्रौ १, ६, ९; वैश्रौ ३, ५ : ६; ५, २ : १४; -ग्रे वाश्रौ १,२,२,२; -ग्रैः काश्रौ २, ६, ३९; भाश्रौ २, ४, ३; वैश्रौ ५, २ : ११.

वेदा(द-आ)दान-प्रभृति– -ति माश्रौ १,७,३,१३; २,२,१,५१××.

वेदा(द-अ)भिमर्शन– -नम् काश्रौ १२, २५,१३.

वेदाभिमर्शना(न-आ)दि– -दि वैश्रौ १५,३३ : ४.

√वेदि[n], वेदयति बौपि १,४ : ९. वेदयित्वा बौपि १,१५ : ६.

१वेदो(द-उ)पयाम[o]– -मम् वाश्रौ १,३,७,१.

२वेदो(द-उ)पयाम,मा[p]– -मः माश्रौ १, २,३,१३;२४[q]; ६,१८;३,१, ५[f]; ५,१; ८,५,१०; -मा माश्रौ १, २, ५, १२; -मेन काठश्रौ ६३.

२वेद्य– पा ५,१,२.

१वेद-कर्मन्– प्रमृ. √विद्(ज्ञाने) द्र.

२वेद-कर्मन्– प्रमृ. ३वेद– द्र.

वेददर्श[r]–

वेदन– √विद्(ज्ञाने) द्र.

वेदना[s]– पावा ३,३,१०७; -ना कप २२,५,२.

---

a) =नदी-विशेष- । b) उप. <√व्ये [संवरणे] । c) परस्परं पाभे. । d) =कुशमुष्टि- । वैप१ द्र. । e) व्यु.? । f) सप्र. वैगृ ५, ४ : ३५ वेदकूर्चम् इति पाभे. । g) सप्र. वेदेनोपयम्यासीन. इत्यस्य स्थाने माश्रौ १,३,१,५ वेदोपयामः इति पाभे. । h) षस. । ॰दं कु॰ इति पाठः? यनि. शोधः (तु. c.) । i) बस. । j) उप. =खण्ड- । k) उप. <प्रा (प्र√अ)स् [क्षेपणे] । l) षस. । m) द्वस. उप नाप. (यज्ञिय-पात्र-विशेष-) । n) धा. संमार्जने वृत्तिः । o) =दर्भमय-उपकरण- । षस. । p) विप. । बस. उप. = बन्धन- (वैतु BW. MW. नाप. [ उपकरण-विशेष- ], पूप. =२वेद- इति च) । q) वैतु. संस्कर्तुः टि. क्लिष्ट. इव संभाव्यः । r) पृ १२६८ h द्र. । s) नाप. । < √विद् [ वेदनायाम् ] ।

†¹विदम्[a] आग्र १, १५, १; कौग्र १, १६,७; शांग्र १,२४,४.

¹विदमनुष्याद्[b] शांश्रौ १०,१४,२.

वेदय- √विद्(ज्ञाने) द्र.

वेदयित्वा ३वेद- द्र.

†¹वेदस्[c]- -दः बौश्रौ २८, १० : ७; आपमं २,१४,३; आग्र १, १५, ३[d]; आग्निग्र २, १,३ : ६; भाग्र; अप ४८, ६१[e]; ९५[f]; -दसे हिश्रौ २,५,३१; ६,४, ५; २१, २,७१; -दांसि आपश्रौ ६,२३, १; भाग्र २, २० : ११.

वेदान्त- प्रमृ. √विद् (ज्ञाने) द्र.

¹वेदाय भाग्र २,२२ : १२[g].

√वेदि ३वेद- द्र.

१वेदि[h]-

२वेदि,दी[i]- पाउ ४, ११९; -दिः आश्रौ ३,१४,१०†; ८,१३, ९; ९,७,१३; १०, ९,३†[j]; शांश्रौ; काश्रौ २०, ७,१५†[j]; वाश्रौ ३, ४,४,१†[j]; लाश्रौ ९,१०,१४†[j]; वैताश्रौ ३७, ३†[j]; काशु ६,१३; ७, २; १७; आपशु ५, १३; १४†; ६, ४†; १२; बौशु ३: २७; १६ : १३; हिशु २, २४; २५†; ३२†; -दिम् आश्रौ २,३,११; ४,१०, ६; शांश्रौ ३, १६,१७;८,२१,१†[j]××; काश्रौ; आपश्रौ ३, १३, ५[j];†[k]; बौश्रौ १५, २९ : ११†[j]; माश्रौ २, ८, ८†[k]; ३,१२, ३†[k]; माश्रौ १, ३, ५, २६[j];†[k]; हिश्रौ २, ६, ३०[j];†[k]; -दी काश्रौ ५,३,९; १९, २, १; आपश्रौ ८, ५, ४; १०; ११××; बौश्रौ; -दीः वैग्र १,९ : १६; -देः आश्रौ १, ३, २२; २, १७, २; ८; ३,१,८; शांश्रौ; -दौ शांश्रौ ३,१४,१५; ४, ८, २; -द्या बौश्रौ १९, ७ : ४६†; -द्याः आश्रौ १०,८,२; आपश्रौ २, ११, ९; १५,१; ८, १३, ८; १४, २५××; माश्रौ; -द्याम् आश्रौ ३, १, २०; ५, २, ८; ११, ४; काश्रौ; -द्यै आपश्रौ २२, १२, २०; बौश्रौ १, ११ : १; १२ : ४२; ४४; १३ : १××; माश्रौ.

वेदि-करण- -णम् काश्रौ २, ६, २२; काठश्रौ ३; चाअ १ : ९; -णानि[l] आपश्रौ १२,१९,६;वैश्रौ १५, २३ : १; हिश्रौ ८,५,२३.

वेदिकरण-परिस्तरण-पाणिप्रक्षालन(न-आ)स्तरण- -णानि वैश्रौ १४,१४ : ३.

वेदि-कर्मन्- -र्म भाश्रौ २, ३, ५; मीसू १२,१,८.

वेदिकर्म-प्रभृति- -ति द्राश्रौ १४,४,१८.

वेदि-कार[m]- -राः बौश्रौ १०,२३ : १३.

वेदि-काल- -लात् माश्रौ ५, २, ४, ७; १२, २; -ले आपश्रौ २०, ९,१; माश्रौ ५,२,४,८; १५,१.

वेदि-गत- -तः अप २४, ५,३.

वेदि-तृण- -णे काश्रौ ६, ५,९;९, ६, ३०.

वेदि-तृतीय- -ये आपश्रौ १९, १, १४; ११, ५; काश्रौसं २५ः१; बौश्रौ १९,१ : ३; वाश्रौ ३, ३, १, ३२; २,५; हिश्रौ २३, ३, ५; बौशु ३ : ३०; हिशु २,१९.

वेदि-त्व- -त्वम् वाधूश्रौ ४, ६१ : २.

वेदि-देश- -शम् आपश्रौ ६, ३,६; वैश्रौ ४,११ : ३; हिश्रौ ६, ३, १; -शे द्राश्रौ १, ३, ३; लाश्रौ १,३,१; माश्रौ १,७,६,५४.

वेदि-पर्योषण- -णात् माश्रौ ६, ३, ६,२३.

वेदि-पुरीष- -षात् माश्रौ १,७,३, ३७; आग्र १, ५,५.

वेदि-प्रोक्ष- -क्षात् आपश्रौ १७,१६, १; वैश्रौ १९,६ : ९५.

वेदि-प्रोक्षण- -णे मीसू ११, ४, ४७.

वेदि-बर्हिस्- -र्हिः काश्रौ ३,२,५.

वेदि-मध्य- -ध्यम् काश्रौ २२, ६, १५; -ध्यात् वैश्रौ १२, ११ : १२; द्राश्रौ १३, १, ५; -ध्ये वैश्रौ २,६ : ३; ९,४ : ७.

वेदि-मूल- -लम् वैग्र १,२१ : ११.

वेदि-रूप[n]- -पम् माश्रौ ५,२,४,८.

वेदि-लोष्ट- -ष्टम् भाग्र १,११ : ८.

---

*a*) वा, इदम् इति द्विपदः पाठः द्र. (तु. हरदत्तः; वैतु. PW. प्रमृ. = वित्त- इति, old. = ज्ञान- इति)।
*b*) पाठः? देवमनुष्यादि- > -दि इति शोधः (तु. C.)। *c*) वैप १ द्र.। *d*) वैतु. [पक्षे] old. यनि. वेद- [अर्थः?] इति। *e*) कर्म-नामन्-। *f*) यज्ञ-नामन्-। *g*) पाठः? भेदाय (= भेदनाय) इति शोधः। सस्थ. ?द्विपतो > -ताम् (षड्), ?सपत्नान् > -त्नानाम्, ?श्वापदान् > -दानाम्, ?सरीसृपान् > -पानाम्, ?हस्तिनः > हस्तिनाम् इत्येते चापि शोधाः द्र.। *h*) पृ १०८२ h द्र.। *i*) = सपा. ऋ १,१६४,३५ प्रमृ. माश १३,५,२, २१। तै ७,४,१८,२ प्रमृ. तु वेदिम् इति पाभे.। *j*) सपा. मै ३,४,१ प्रमृ. वेदिः इति पाभे.। *k*) पाभे. वैप १ वेदिम् काठ ३१,१४ टि. द्र.। *l*) नाप. (तदर्थोपकरण- [स्फ्यादि-])। उप. करणे प्र.। *m*) नाप.। *n*) बस.।

१०; माश्र १,७,९; वाश्र १०,९.

वेदि-वर्धन- -नम् काश्री ८,८,११; काशु ६,८.

वेदि-विज्ञान- -नम् कौसू ३७, २.

वेदि-विमान- -नम् बौश्री २६, २३:४.

वेदि-विहरण- -णानि आपशु ५,७; हिशु २,१६.

वेदि-शेष- -षम् काठश्री १०,२.

वेदि-श्रोणि,णी[a]- -णिम् काश्री १३, ३,१२; माश्री २, ४, ५, ६; ५, २, ८, ५; १६; वाश्री १, ७, ४,५; ३, २, ५, ३६; -णीम् श्राश्री ५, ११, १; हिश्री २१, १, ४; -णेः काश्री ५,४, ९; कौसू १३७, ३६; -णी काश्री २,७,१९; ८,१,२०××; माश्री; -ण्या श्राश्री १,१,२३; -ण्याम् श्राश्री ६, १०, २१; शांश्री.

¶वेदि-पद्- -पत् आपश्री ५, १४, ५;बौश्री २,१७:२८; हिश्री३,४, २८; या १४,३१;-पद्.[b] श्राश्री २,६,९; शांश्री ४,४,२; आपश्री १, ७, १३; हिश्री २, ७, १८; -पदे श्राश्री ४, १३, ७; शांश्री.

वेदि-संयोग- -गात् मीसू ११, २, ४५.

!वेदि-सद्- -सदः वाश्री ३, २, ४, १०.

वेदि-संधि- -धौ बौश्री २१,२:१८; माश्री २,२, २, १८.

वेदि-समीप- -पे काश्री २५, ११, १६.

वेदि-संमान- -नात् आपश्री १४, ५,१०.

वेदि-संमित,ता- -तम् बौश्री १८, २०:४; -ताम् हिश्री ९,८,१३; तैप्रा ६,१२†.

वेदि-सहित- -तः काश्री ११,१,६.

वेदि-स्कन्ध- -न्धः विध १, ७.

वेदि-स्तरण- -णम् हिश्री ७,७,३६; -णे वैश्री.९,५:८.

वेदिस्तरण-प्रभृति- -तीनि हिश्री १२, ६, २४.

वेदि-स्पृश्- -स्पृक् काश्री १,८,२८.

वेदि-स्रक्ति- -क्तिषु वाश्री ३,१, १, ३१; २,५,२७; -क्त्याम् काश्री २५,१३, ३०.

वेदी(दि-इ)ष्टका-प्रमाण[c]- -णम् काश्री १६, ८,२१; काशु ६,१.

वेद्यं(दि-अं)स- -सम् शांश्री १७, १५,२; वाश्री १,३,५,२; हिश्री; -सयोः माश्री १,३,४,२८××; वाश्री १, ३, ६, २३; -सात् आपश्री ७,४,१; भाश्री ७,३,२; १२,५,४; माश्री ३, २, १, ३; -से आपश्री १२, १७, ५; १३, ११,६; वाश्री ३, २, ७,८; वैश्री १५,११:५; -सौ आपश्री २,३, १; बौश्री २४, २४ : ६; माश्री २, २, ११; वैश्री ४, १२ : ८; हिश्री १,६, ९०; आपशु ४, ६; हिशु २, ६.

!वेद्यभिम्[d] वैताश्री २८, २३.

वेद्य(दि-अ)भि-मान- -नम् काश्री १६, ७, २८.

वेद्य(दि-अ)ग्र- -ग्रे वैश्री १०,३:३.

वेद्य(दि-अ)धस्तात् वैग१, १० : ९; १२:२.

वेद्य(दि-अ)न्त- -न्तम् बौश्री ३,२७: ८;२१,९ : १६; हिश्री; -न्तस्य वाश्री १, ६, २, १५; -न्तात् आपश्री११,९,५; काठश्री १००; माश्री २, २, ३, १३; जैश्रीका १३४![e]; -न्तान् आपश्री २,११, १०; भाश्री २, ११,१२; वाश्री; -न्ते काश्री ८,६,३०; आपश्री; बौश्री १६, २१ : ६![f]; -न्तेन काठश्री ३४; ५१; ११०; बौश्री ६,२२ : २२××.

वेद्यन्त-संमि(त>)ता- -ता शांश्री १, ४, २.

वेद्य(दि-अ)न्तर- -रे काश्री ५, ४, १०.

वेद्य(दि-अ)र्ध- -र्धम् वैश्री १४,५: ४; वैग्र २, १७ : ५.

वेद्या(दि-आ)कृति- -तिम् काग्र ५२,५; ५७,२; माग्र १, ६, २; २,६,४.

वेद्या(दि-आ)क्रमण[g]- -णेन जैश्री १३ : १; १८: १.

वेद्याक्रमण-मन्त्र-तम् (:) जैश्रीका १३१.

वेद्या(दि-आ)स्तरणा(ण-आ)दि- -दि काश्री १७,२०,१८[h].

वेद्यु(दि-उ)त्कर- -रौ बौश्री १,११: १९; २, ६ : ५; १२; ३, २७: ४××; हिश्री २१,१,३; जैश्री.

वेद्यु(दि-उ)त्कर-पुरीषा(ष-आ) दि[i]- -दिभिः वैश्री २०,२:१०.

वेद्यु(दि-उ)त्तर- -रम् वैश्री १, ३: ४[j].

a) =वेदि-पश्चिमभाग-। b) पाभे. वैप १ वेदिषद: टि. द.। c) द्रस.>षस.। d) सप्त. इति MW. I टि. वेद्यभी (तु. [अर्थतः] सोमादित्यः) यद्वा वेद्यभिमानम् (तु. काश्री १६, ७,२८)। e) °ताम् इति पाठः? यनि. शोधः। f) °न्त इति पाठः? यनि. शोधः। g) =मन्त्र-विशेष-। उप. करणे ल्युट्। h) पाभे. वैप १ १८४१ c द.। i) द्रस. >बस.। j) वेद्यन्तरम् इति संस्कर्तुः टि.।

वेद्यु(दि-उ)त्तरवेदि-धिष्णियो(य-उ)त्करो(र-उ)परव-खर-सदोहविर्धाना(न-आ)दि- -दिभ्यः वैश्रौ २१,१०:७[a].

वेद्यु(दि-उ)त्तरांसवहिष्पवमानास्ताव[b]- -वम् वैश्रौ १५,२३:३[c].

वेद्यु(दि-उ)द्धनन-व्रत- -तम् मीसू १२,२,१६.

वेद्यु(दि-उ)द्याना(न-आ)राम-समा-प्रपा-तडाग-देवगृह-महागमस्थान-नदी- -दीनाम् शंव १३३.

वेद्यु(दि-उ)व्रत- -तम् वैश्रौ १,३:४.

वेदितव्य-, १वेद्य- प्रमृ. √विद् (ज्ञाने) द्र.

२वेद्य- ३वेद- द्र.

वेद्यंस- प्रमृ. २वेदि- द्र.

१वेध- √विध् (ताडने) द्र.

२वेध[d]- -धाः बौश्रौप्र १७:५.

वेधस्[e]- पाउ ४,२२५; -†०धः आश्रौ ३, १०, १२; शांश्रौ ३, ३, ३; -धसः काश्रौ २,८,१६†; †बौश्रौ १,८:१९; ११:२९; ३, १५:१२; २२:३; माश्रौ; वाध १६, २१[f]; -०धसः वाध६,४†; -धसम् शांश्रौ ६,१०,५†; -धसा अशां १९,४†; -†धसे आश्रौ ४, १३, ७[g]; आपश्रौ ५,५,८[g]; १९,३,२; माश्रौ ५, ३,९[g]; माश्रौ १,५,१,१६[g]; वाश्रौ १, ४,१,६[g]; वैश्रौ १,५:१३[g]; हिश्रौ ३, २, ४४[g]; ऋअ २, ५,१५[g]; ३, २४; चाअ ७:६[h]; या १०,६[h]; -धाः निघ ३,१५†[i].

वैधस[j]- -सः शांश्रौ १५, १७, १.

√वेन्(वेधा.)[k], †वेनति अप ४८, ९[l];१५[m]; बृदे २,५२६; निघ २, ६[n];१४[o]; ३,१४[l]; वेनसि हिश्रौ ९,५,३७†.

वेन(वप्रा.)[g]- पाउ ३,६; पाग ४,१, १५१[q]; -नः †आश्रौ ४, ६,३[r]; ७,४; ५, १८, ५; शांश्रौ; अप ४८, ८५†[l]; ऋअ २, ९,८५[q]; बृदे १,१२४[q]; शुअ १, ४५३†; साअ १, ३२०; ५६१; अअ ४, १; †निघ ३, १५[l]; १७[p]; ५, ४; -नम् बौश्रौ १९, ७:५†; बृदे २, ५२६[q]; ऋआ ७, ३८†; -नस्य शुअ १,४५३[q]; चाअ ४,३[q]; -नाः ऋअ१८,२६; -नात् आपश्रौ १७, १८,१†.

वैन्य,न्या[q,e]- पाउ४,१,१५१; -०न्य आश्रौ १२, १०, ११; आपश्रौ २४, ६, ८; बौश्रौप्र ८:३; हिश्रौ २१,३,७; वैध ४, २, ६; -न्यः ऋअ २, १०, १४८; साअ १, ३१६; -न्यम्[q] ऋअ २,१०,१२३; बृदे ८, ४१; ६६; -न्या साअ १, ३२०[r]; -न्याः आपश्रौ २४, ६, ७; बौश्रौप्र ८:१; हिश्रौ २१,३, ७; -न्यानाम् वैध ४,२,६.

वेन-वत् आपश्रौ२४,६,८; बौश्रौप्र ८:२; हिश्रौ २१, ३, ७; वैध ४,२,६.

√वेप्[s] पाधा. भ्वा. आत्म. कम्पने, वेपध्वम् शांगृ ३,७,२†[l]; अवेपत् मागृ २, १, १४†; वेपेत वैश्रौ २०,३४:८; हिश्रौ १५,८,१. †अवेविष्ठाः शांश्रौ १३, २, ३; आपश्रौ ९, १८, ३; बौश्रौ २८, ६:५; वैश्रौ २०,३४:८; हिश्रौ १५,८, १; †वेपिद्वम्[t] आपश्रौ ६,२७,३; द्राश्रौ ७, ३,१; लाश्रौ ३, ३, १; मागृ १, २०:३; हिगृ १, २९,१; वेपीद्वम् हिश्रौ ६,७,८†[l].

वेपथु- पा ३,३,८९; -थुः बौश्रौ २,५:३.

वेपन[c]- -नः वैश्रौ १,१:२३; -नाः वैगृ १,२३:६†.

वेपमान- -ने शांश्रौ १३, २, ३; आपश्रौ ९,१८,३; हिश्रौ १५,८, १.

†वेपस्[e]- -पः अप ४८, ६१;९५[p]; निघ २,१.

वेपित- -ते बौश्रौ २७, ४:८;११.

१वेमन्- √वे द्र.

२वेमन्-(>वैमन- पा.) पाग ४, ३, ७५.

वेम-न- √वे द्र.

वेराणक[u]- (वैराणकीय- पा.) पाग ४, २,९०.

१विरे वाश्रौ ३, ४,१,३२.

√वेल् पाधा. भ्वा. पर. चलने; चुरा. उभ. कालोपदेशे.

वेलय[d]- -याः बौश्रौप्र ४१:१०.

a) तु. सप्र. आपश्रौ १४,२३,११। b) पस.>सस.। c) सप्र. आपश्रौ १२,१९,७ वहिष्पवमानास्तावम् इति, हिश्रौ ८,५,२६ यत्र वहिष्पवमाने न स्तुवते इति पामे.। d) व्यप.। e) वैप १ द्र.। f) =विद-। g) पामे. वैप १ वेधसे ऋ ५, १५,१ टि. द्र.। h) पामे. वैप १ वेधसे ऋ ७, ४६,१ टि. द्र.। i) मेधावि-नामनः। j) =हरिश्चन्द्र-। कस्ये भस् प्र.। k) या १०, ३८ परामृष्टः द्र.। l) धा. अर्चायां वृत्तिः। m) धा. गतौ वृत्तिः। n) धा. इच्छायां वृत्तिः। o) धा. गतौ वृत्तिः। p) =यज्ञ-। q) =सूर्य-। r) =शत्रु-। s) पा ८,४,३४ परामृष्टः द्र.। t) पामे. वैप १ वेपध्वम् टि. द्र.। u) वै° इति BPG. प्रस.।

